॥ श्रीः ॥

# वेदप्रामाण्यचन्द्रिका।

महामहोपाध्यायोपपदैर्बोडसोपाह्वैः
श्रीमद्राजारामशास्त्रिभिः प्रणीता।



तत्सूनुना

"एम्. ए. एल्. एल्. बी" इत्युपपदधारिणा
श्रीमाधवेन द्वितीयवारं,

क्षेमराज श्रीकृष्णदासस्य

"श्रीवेङ्कटेश्वर" (स्टीम्) मुद्रणयन्त्रालये

अङ्कयित्वा प्रकाशिता।

संवत् १९५८, शके १८२३.

सन् १९०२ ई०.

॥ श्रीः ॥

# वेदप्रामाण्यचन्द्रिका।

महामहोपाध्यायोपपदैर्बोडसोपाह्वैः
श्रीमद्राजारामशास्त्रिभिः प्रणीता ।



तत्सूनुना

"एम्. ए. एल्. एल्. बी" इत्युपपदधारिणा
श्रीमाधवेन द्वितीयवारं,

**क्षेमराज श्रीकृष्णदासस्य**

"श्रीवेङ्कटेश्वर" (स्टीम्) मुद्रणयन्त्रालये

अङ्कयित्वा प्रकाशिता ।

---

संवत् १९५८, शके १८२३.

सन् १९०२ ई०.

---

# विज्ञप्तिः।



पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥

याज्ञवल्क्यः

तत्रभवतां श्रीमदस्मत्तातचरणानां संग्रहरूपेण प्रणीता कृतिरियं वेदप्रामाण्यचन्द्रिकाभिधेतः प्राग् दशैकादशवर्षेभ्यः मुद्रणमपेक्ष्यमाणाऽऽसीत् ॥ "प्रोफेसर" पदालंकृतैर्जिन्सीवाले इत्युपनामकैः श्रीधरपण्डितैरेकादशोत्तराष्टादशामिते शके ( १८११ ) मुम्बापुर्यां व्याख्यानद्वारा वेदानांपौरुषेयत्वापौरुषेयत्वादिचर्चा प्रारब्धासा नास्तिकास्तिकयोरुभयोरप्युद्वेगकरी विगतसत्सिद्धान्ता कुतार्किकानधीतानधिकारिजनजनितकोलाहला वादवितण्डावाक्पारुष्यादिभिः संमोहितजनचेतसा प्रतिष्ठिताप्रतिष्ठितबुद्धीनां सममेव व्यामोहान्धकारं कृतवती वेदप्रामाण्यविषये प्रायोऽनेकेषां जिज्ञासां प्रादुरकरोत्॥ ततः कतिपयैर्जिज्ञासुभिरास्तिकमतमार्गानुवर्त्तिभिर्महानुभावैः प्रोत्साहिता अल्पावसरेणैव व्यरचयंश्चन्द्रिकामिमां श्रीमदस्मत्तातचरणाः ॥ मुद्रणमधिगतापि सा तच्छिष्यप्रयत्नेन क्वचित्कालाभ्यन्तरेऽङ्किताऽचिरेणैव वह्नौ मुद्रायन्त्रालयेन सार्द्धमस्तं गताऽभूत् ॥ ततः कैश्चित्सद्धर्मशालिभिः श्रीमदस्मत्तातपादशिष्यैश्च प्रेरितः "श्रीवेङ्कटेश्वर" मुद्रणालयाधिकारिभिः श्रीक्षेमराज श्रीकृष्णदासश्रेष्ठिभिः सनाथीकृतोऽहं द्वितीयवारमङ्कने प्रवृत्तो 'लेले' इत्युपाह्वस्य श्रीकाशीनाथशास्त्रिणो वैयाकरणश्रीकाशीशेषव्यङ्कटाचलशास्त्रिणश्च साहाय्येन पारं गन्तुमशक्नवं च ॥ सेयं वेदप्रामाण्यचन्द्रिका चन्द्रशेखरशेखरालङ्कारभूतशुक्लेन्दुचन्द्रिकेव सदाह्लादकारिणी कुतार्किकाज्ञानतिमिरविध्वंसिनी सत्सिद्धान्तप्रकाशनेन सुजनसौहार्दमाचरन्ती प्रकर्षेण जगति स्वप्रकाशेन निरर्गला विलसत्वित्येवमाशास्महे॥ नायं ग्रन्थः किमपि नवीनमतं प्रवर्तयितुमुत्सहते। यतो वेदानां पौरुषेयत्वापौरुषेयत्वादिविचारोऽतिप्राचीनकौत्सचार्वाकबौद्धादिनास्तिकैराक्षिप्तः सन् श्रीमज्जैमिनिबादरायणादिमुनिभिः सिद्धान्तित उपलभ्यत एव प्राचीनेषु तेषुतेषु ग्रन्थेषु। किमुत पूर्वोत्तरमीमांसाप्रामाण्यस्याधारभूतः सर्वेषां सूत्रस्मृतीतिहासपुराणादिकानामास्तिकधर्मग्रन्थानां मूलभूतोऽयं वेदप्रामाण्यपक्षः आक्षिप्तः प्राक्कालाद्विवादविषयीकृतो विवादिमातङ्गपरम्परया विदलीकृतपूर्वपक्षः पुनःपुनरनेकैर्दर्शनकारैर्व्याख्याकृद्भिश्च स्वस्वपरिपाट्या स्वतःप्रामाण्यापौरुषेयत्वव्यवस्थापनेन सिद्धान्तितः। स्वतःप्रमाणं परतःप्रमाणं वेति मण्डनाचार्यद्वाःस्थाः कीराङ्गना अपि प्रवदन्ति स्मेति किंवदन्ती जागर्ति। चार्वाकबौद्धम्लेच्छादिनास्तिकैः पुनःपुनः प्रतिहन्यमानमपि वेदानां प्रामाण्यं श्रीमदाचार्यैरसकृत्प्रतिष्ठापितं धर्मसंस्थापनाय। कः पुनरस्मिन्निर्विशयीकृते विषये

नवीनः कल्पः स्यात् का वाऽभिनवा रचना कर्तुं शक्या । वादिविवादिकल्पितपूर्वोत्तरपक्षवचनं पुरस्कृत्य पूर्वाचार्यग्रथितानां सिद्धान्तानां प्रामाण्यविषयकाणां साररूपेण संग्रहकरणायैवैष प्रयत्नः । स कथं वा कियन्मात्रं सफलीभूतः सुसंपन्नो न वेत्येतस्मिन्विषये विदुषां परीक्षा निकषीभविष्यति ।

अवश्यं हीदं कार्यम् ॥ पूर्वाचार्यैर्वेदानामपौरुषेयत्वं स्वतःप्रामाण्यं च साधयितुं यानि यानि तर्कोदाहरणान्युपन्यस्य वादसरणिं च स्वीकृत्य सिद्धान्ताः प्रतिष्ठापितास्तान्प्रथमं सम्यग् ज्ञात्वाऽनन्तरमाधुनिकैः प्रामाण्याप्रामाण्यविवादे स्वधिया प्रवर्तितव्यम् । श्रवणपूर्वकमेव हि मननं संभवति । ततश्च तत्रान्यतरान्निश्चेतुं शक्यते ॥ तदा हि श्रुतिप्रामाण्यविचिकित्सां कर्तुमुत्सहमाना आधुनिकाः पण्डिताः प्राचीनाप्तग्रन्थान्तर्गतानेतद्विषयान्समालोच्यानन्तरमभिनवमतप्रमाणतर्कोदाहरणादीनां युक्तायुक्ततां साधु विमृशेयुरिति मनसिकृत्य प्रणीतोऽयं ग्रन्थो वेदप्रामाण्यचन्द्रिकाख्यः श्रीमदस्मत्तातचरणैः । न हि पूर्वजा मे मूढा आसतेति दृढं मन्यमानेन स्वेनैव प्रामाण्याप्रामाण्यविचिकित्सायां दुर्ज्ञानायां सत्यत्वाधिगमः श्रुत्याद्याप्तग्रन्थेषु प्रामाण्यग्रहो वा कर्तुं शक्यः । पूर्वाभिसंचितं परंपरागतं सिद्धान्तद्रव्यमभिनवप्राप्तया तर्कसामग्र्या प्रसाधनीयमित्येतल्लक्ष्यं पूर्वापरज्ञानविशदीकृतधीभिस्तीक्ष्णीकृततर्कशरसन्धानैराधुनिकपण्डितैरभिलक्षितव्यम् ॥ माता विरूपा दुर्वृत्ता क्रूरस्वभावापि पालनीया किमुत वात्सल्यपूर्णाचित्ता जननीति न्यायेन परधर्माक्रान्तो नास्तिकवादप्रपञ्चेन जर्जरितो वैदिकधर्मोऽधुनात्यन्तकष्टेनापि रक्षणमनवधीरणां चार्हति ॥ श्रुतिप्रामाण्यं हि वैदिकधर्माधारः । जगत्प्रतिष्ठाभूतं ब्रह्म । तत्प्रतिपादिका श्रुतिर्यद्यप्रामाण्यग्रहाक्रान्ता भवेत्तर्हि दूरापास्तं ब्रह्मज्ञानं विलुप्तो मोक्षो विच्छिन्नो हि धर्मप्रचार आकुलीक्रियेत चाखिला वैदिकमार्गपद्धतिः । तस्माद्वैदिकधर्मान्तर्भविष्णुना जनमात्रेणाङ्गीकर्तव्ये वेदानां स्वतःप्रामाण्यापौरुषेयत्वे इत्यत्र न कोऽपि संदेहः ।

परंपरागतरूढिमार्गानुवर्तिनोऽपि पण्डिताः पुराणमित्येव न साधु सर्वमिति कविकुलगुरुवचनं सम्यगनुसन्धायार्वाचीनन्यायतर्कप्रमाणादींस्तुच्छत्वेनानुपेक्ष्यहिताहितविवेकं सदङ्गीकरणमसन्निराकरणं च क्षीरनीरन्यायेन कर्तुमर्हन्ति । नास्तिकास्तिकविवादः पुराणोऽपि नवनवीभावमापन्नः कालानुसारेणाभिनवजातिप्रतिविधानमपेक्षते । आंग्लविद्यादिबलेनाधुना विधीयमानो महानाचारविचारपरिवर्तो न केनाप्युपलक्षयितुं शक्यते । वर्णसङ्करो धर्मविच्छेदो देवगुरुशास्त्रनिन्दा चेत्यादयो दोषाः प्रतिदिनं विवर्द्धमाना विधर्मनृपशासनाश्रयेणोपबृंहिताः सर्वधर्मक्षयकारकं घोरकलिकालमदूरीकुर्वन्तीत्यपिहितमेव । "सर्वनाशे समुत्पन्ने ह्यर्धं त्यजति

पण्डितः" इति न्यायेनेत्थमखिलवेदविद्याधर्मानुष्ठानादिविलयनप्रसङ्गे प्राप्ते किमु कर्तव्यं कथं वानुष्ठातव्यमित्येतत्पृथक् सर्वैश्चैकीभूय विचिन्तनीयमवशिष्यते खलु पृथग् धर्मकामैस्तत्त्वदर्शिभिर्देशदेशान्तरस्थैः पण्डितैः। म्लेच्छविद्याकलुषितमतयो विच्छिन्नप्राचीनाचार्यसम्प्रदायाः परानुकरणमात्रपटवः परकीयानुरक्ता अहमहमिकाविष्टा आधुनिकपण्डितास्तु केवलतर्काश्रयणपरा भवन्ति। ते स्वभावतोऽप्रतिष्ठस्य तर्कस्य श्रुत्यनुपबृंहितस्य विगतनामरूपेऽतिगम्भीरे भावयाथात्म्ये गुहास्थिते धर्म्मतत्त्वेऽकिञ्चित्करत्वं नाभ्युपयन्ति ॥ ज्ञानलवदुर्विदग्धस्येव तेषां चित्तानुरञ्जनं शङ्कासमाधिश्च केवलप्राचीनग्रन्थोद्धृतैः प्रमाणवचनादिभिः कर्तुं दुष्करम् ॥ विचारणीयश्चैष प्रश्नः सुधीभिः प्रागवरैर्धर्मशालिभिरिति सविनयं साशंसं विज्ञाप्योपरमे इति शम्।

विद्वच्छन्दानुवर्ती माधवशर्मा.



॥ श्रीः ॥

# वेदप्रामाण्यचन्द्रिका।

वेदप्रकाशनाद्येन सृष्टिस्थितिलयाः सदा ।
क्रियन्ते जगदुद्धर्तुं तस्मै श्रीब्रह्मणे नमः ॥ १ ॥
अपौरुषेयरूपोऽपि पुरुषाग्र्यसमादृतः ।
जगदुद्धारबीजं तं श्रीवेदपुरुषं स्तुमः ॥ २ ॥

इह खलु संसारचक्रे परिवर्तमानानां चत्वारः पुरुषार्था धर्मार्थकाम-मोक्षाख्याः सकलश्रुतिस्मृतीतिहासपुराणादिषु वर्ण्यन्ते जनैः सेव्यत्वेन। **तथा च ( महाभारते )** भीमसेनवचो युधिष्ठिरं प्रति–" धर्मं चार्थं च कामं च यथावद्वदतां वर ॥ विभज्य काले कालज्ञः सर्वान्सेवेत पण्डितः ॥ मोक्षो वा परमं श्रेय एषां राजन्सुखार्थिनाम् " इति। **( स्मृत्यन्तरेऽपि )** "धर्ममर्थं च कामं च यथाशक्ति न हापयेद्" इति। **तथान्यत्रापि-**"न पूर्वाह्णमध्यन्दिनापराह्णानफलान्कुर्याद्यथाशक्ति धर्मार्थकामेभ्यः " इति । **तत्र** निरतिशयानन्दलक्षणस्यात्यन्तिकदुःखनिवृत्तिलक्षणस्य वा मोक्षस्यैव निरुपधीच्छाविषयत्वात्पुरुषेणार्थ्यमानतया मुख्यं पुरुषार्थत्वम् ।

**धर्मादीनां** तु तत्साधनतामात्रेण ॥ **तत्रापि**--धर्ममात्रं यथायोगं सर्वेषां साधनम् । अत एव प्रवृत्तिनिवृत्त्यात्मकतया **द्विविधस्यापि धर्मस्य** पुरुषार्थसाधनतोक्ता **( वृद्धैः )** –" प्रवृत्तिसंज्ञके धर्मे फलमभ्युदयो मतः । निवृत्तिसंज्ञके धर्मे फलं निःश्रेयसं मतम् " इति ॥ **( स्कान्देऽपि )**–धर्मात्सुखं च ज्ञानं च यस्मादुभयमाप्नुयात् । तस्मात्सर्वं परित्यज्य विद्वान्धर्मं समाचरेद् " इति ॥ **(भारते)**–"धर्म एव प्लवो नान्यः स्वर्गं द्रौपदि गच्छताम्" इत्यादि ।

**दुःखाभाव**साधनतामपि धर्मस्य–" धर्मेण पापमपनुदति "

इति श्रुतिर्दुःखसाधनपापापनोदनद्वाराऽऽह । प्रायश्चित्तादेर्धर्मस्य दुरित-क्षयद्वारा दुःखाभावसाधनता सकलश्रुतिस्मृतीतिहासपुराणादिषु प्रसिद्धा।

**अर्थस्यापि** सुखदुःखाभावसाधनता सर्वानुभवसिद्धाऽऽगमसिद्धा च।"उच्चा दिवि दक्षिणावन्तो अस्थुर्ये अश्वदाः सह ते सूर्येण । हिरण्यदा अमृतत्वं भजन्ते वासोदाः सोम प्रतिरन्त आयुः " इति ( **मन्त्र-वर्णात्** )। " सद्यः शुध्यति हेमद " इति **स्मृतेश्च** ।

**कामोप्येवं** पुरुषार्थः। सुखरूपता च तस्य ( **महाभारते आर-ण्यके पर्वणि** ) स्तूयते–" द्रव्यार्थस्पर्शसंयोगे या प्रीतिरुपजायते । स **काम**श्चित्तसङ्कल्पः शरीरं नास्य दृश्यते " इति ॥ **तथा** ( **तत्रैव** )–अर्थार्थी पुरुषो राजन्बृहन्तं धर्ममिच्छति । अर्थ-मिच्छति कामार्थं न कामादन्यमिच्छति ॥ १ ॥ न हि कामेन कामोन्यः साध्यते फलमेव तत् । इन्द्रियाणां च पञ्चानां मनसो हृदयस्य च ॥ २ ॥ विषये वर्त्तमानानां या प्रीतिरुपजायते । स **काम** इति मे बुद्धिः कर्मणां फलमुत्तमम् " इति ॥ ३ ॥ अत्र हि "मुत्प्रीतिः प्रमदो हर्षः " इत्यादि ( **कोश** ) प्रतिपादितसुखपर्यायप्रीतिशब्देना-भिधानात्फलान्तरानभिधानात्फलरूपताभिधानाच्च कामस्य सुखरूपता सिध्यति । एवं चेदृशस्य सुखस्य दुःखसम्भिन्नत्वेनाऽऽशुविनाशितया च न मोक्षवत्परमपुरुषार्थत्वम् । विवेकिभिरनर्थ्यमानत्वात् । अतस्तादृ-शसर्वपुरुषार्थतत्साधनसिद्धिरविगीतवेदवेदाङ्गोदितधर्मानुष्ठानादेव यथा धिकारं भवतीति श्रुतिस्मृतीतिहासपुराणादिषु ब्रह्ममनुव्यासप्रभृतिभिः सर्वज्ञैरसकृत्प्रतिपादितम् । वेदातिरिक्तस्य निश्चितपुरुषार्थसाधनस्य कस्यापि तैरदर्शितत्वात् ॥

**सर्वज्ञता** चैषां यथाविधि वेदादीनध्येतृभिरेवावगम्यते नान्यैः ॥ ॥–॥ **कुत** एवं वेदस्य माहात्म्यमिति **चेद्** । ईश्वरप्रकाशितत्वे नास्यापौरुषेयतया स्वतः प्रामाण्यावगमादित्यवेहि । **ईश्वरप्रका-शितत्वं** चास्य--" अस्य महतोभूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः--" " यो ब्रह्माणं विदधाति पूर्वं यो वेदांश्च प्रहिणोति

तस्मै" "ईशानः सर्वविद्यानाम्" इत्यादि (**श्रुति**) भिः— "नक श्चिद्वेदकर्त्तास्ति वेद ईशप्रकाशितः" इत्यादि (**स्मृति**)— भिः शतशः पुराणवाक्यैश्च स्पष्टीकृतम् ।

**स्वतः प्रामाण्यमपि** सर्वशङ्कापरिहारपूर्वकं व्यवस्थापितं **शास्त्रकारैः**--(तथा हि)॥**प्रामाण्यस्य स्वतस्त्वं नाम**-कार्यकारणादेव कार्येण सहाऽऽविर्भूतत्वं, न त्वन्यतः।तच्च वेदे सम्भवति । जगत्कारणेश्वरातिरिक्तस्यापूर्ववेदप्रकाशकस्य कस्याप्यद्ययावदनुपलम्भात् । **स्यादेवं** यदि वेदानामपौरुषयत्वं भवेत् । तदेवासिद्धम्(तथा हि)--**वेदवाक्यानि, पौरुषेयाणि, वाक्यत्वात्, महाभारतादिवाक्यवद्**,इत्यनुमानेन पौरुषेयत्वसिद्धेः । **पौरुषेयत्वं नाम**—स्वतन्त्रपुरुषपूर्वकत्वमेव । अतः क्रमवन्तो वर्णाः—( पदम् ) । क्रमवन्ति पदानि—( वाक्यम् ) । क्रमश्च क्षणोपलब्धवर्णेषु स्वत एवासम्भवादुच्चारणक्रमनिबन्धन एव । उच्चारणक्रमश्च पुरुषप्रयत्नसाध्य एवेति वेदवाक्यान्यपि क्रमवत्त्वेन पुरुषप्रयत्ननिष्पाद्यान्येवेति सिद्धं पौरुषेयत्वमिति **चेत्** ॥ **अत्रोच्यते** ॥ कृतकत्वं वेदानामङ्गीकृत्य तत्कर्त्ता कल्प्यते । सोऽशरीरः शरीरी वा ॥ **आद्यस्तावन्नैव संभवति**—सर्वत्र हि वाक्येषु वृद्धव्यवहारावगतपदपदार्थसम्बन्धस्य चक्षुरादिजन्यतत्तत्पदार्थविशेषविषयकपरस्परविलक्षणक्षणिकज्ञानवतःशरीरिण एव स्वतन्त्रकर्त्तृत्वं दृष्टमिति भवदुक्तवाक्यत्वं तादृशकर्त्तृत्वेन व्याप्तं सत्तादृशकर्त्तृत्वमेव स्वव्यापकं पक्षे साधयदशरीरकर्त्तृत्वं विरुणद्धीत्यशरीरकर्त्तृत्वासिद्धेः ॥ अस्तु तर्ह्यत्राप्यनित्यज्ञानेच्छादिमतः शरीरिण एव कर्त्तृत्वम् । न च योग्यानुपलब्धिबाधः ॥ चिरवृत्ते कर्तर्युपलब्धियोग्यत्वस्यैवाभावादिति **चेत्** । **एतच्च न चतुरचेतसां चेतसि चमत्कारं प्राश्नुते** । **यदि** वेदवाक्यानां शरीरी कर्ता स्यात्तस्य चिरवृत्तत्वेनोपलब्ध्यभावेऽपि कस्यचिदपि निश्चितत्वेनासौ स्मृतिपथमवतरेत् । **न च** केनापि स्मर्यते ।तस्मान्नास्त्येव कर्त्तेति नित्य सिद्धो वेद इति निश्चीयते ।

**स्यादेतत्**--केनचिदस्मरणं वा नित्यत्वे हेतुः **आहोस्वित्** सर्वैरस्मरणम् । **नाद्यः** । देवदत्तेनास्मृतस्यापि घटस्य विष्णुमित्रगृहे विद्यमानत्वात् । **नापि द्वितीयः** । जैमिनीयैरस्मरणेपि कणादाक्षचरणप्रभृतिभिर्मुनिभिः स्मर्यमाणत्वादिति **चेत्** ॥ ॥ **न**॥ तदीयैरपि वृद्धव्यवहारावगतपदार्थसम्बन्धस्य तदर्थविषयकाविलक्षणक्षणिकचक्षुरादिजन्यवेदनस्य मातापितृसम्बन्धप्रसूतपार्थिवशरीरस्य कर्त्तुरस्मरणेनाशरीरेश्वरप्रकाशितत्व एव पर्यवसानात् । यादृशं वेदानां कर्त्तारं ते स्मरन्ति, तादृशकर्त्तृत्वस्य वाक्यत्वं नित्यत्वसिद्धान्तपारिपन्थित्वेन विरोधकं न भवति ॥ **जैमिनीयैस्तु सर्वैः** स्मर्तु योग्यस्याप्यस्मरणाद्योग्यस्मृत्यनुदय एव बाधक इति वाक्यत्वहेतुर्विरुद्धः सन्नुक्तसमस्तविशेषवत्त्वेन स्वतन्त्रपुरुषपूर्वकत्वमपि साधयितुमसमर्थ इति सिद्धो विशेषविरोधस्तस्य हेतोः । **न च**"पुराणं सर्वं शास्त्राणां प्रथमं ब्रह्मणा स्मृतम्।अनन्तरं च वक्त्रेभ्यो वेदास्तस्य विनिःसृताः"इति पुराणस्मृत्या"ऋग्वेद एवाग्नेरजायत यजुर्वेदो वायोस्सामवेद आदित्याद्" इत्यैतरेयब्राह्मणात् " तस्माद्यज्ञात्सर्वहुतः ऋचस्सामानि जज्ञिरे " इत्यादिमन्त्रवर्णाच्च पौरुषेयत्वं सिध्यतीति वक्तुं युक्तमिति**वाच्यम्** ॥ तेषां परस्परविरुद्धार्थकतया प्रमाणान्तरप्रतिहततया च " प्रजापतिरात्मनो वपामुदखिदद्" इत्यादिवदर्थवादत्वेनोपपत्तेः स्वार्थे तात्पर्याभावात् । सत्कार्यवादसिद्धान्ते सृष्ट्यादौ ब्रह्मवक्त्रादिभ्यस्तदाविर्भावमात्रं, न त्वसतामुत्पत्तिरिति स्वीकारे एकमूलकल्पनालाघवेन धारावाहिकतयानादित्वसिद्धेश्च ॥ **ननु** काठकं कौथुमं तैत्तिरीयकमित्यादिसमाख्या तत्तद्वेदविषया लोके दृष्टा । तद्धितप्रत्ययश्च तेन प्रोक्तमित्यस्मिन्नर्थे वर्तते॥ **तथा** सति व्यासेन प्रोक्तं वैयासिकं भारतमित्यादाविव पौरुषेयत्वं प्रतीयते । तथा च विमतं वेदवाक्यं, पौरुषेयं, वाक्यत्वात्,कालिदासादिवाक्यवद्,इत्युक्तानुमानेनापौरुषेयत्वं न सिध्यतीति **चेत्** ॥ **न** ॥ अध्ययनसंप्रदायप्रवर्तकत्वेन समाख्योपपत्तेः ॥ कठकौथुमा कृतत्वाभ्युपगमे पूर्वोक्ताऽऽविर्भावमात्रबोधकेन--" तस्मा-

यज्ञात्सर्वहुतः" इत्यादिवाक्येन विरोधस्य दुष्परिहरत्वात् । एकेन मुनिना कृते परमुनेस्तत्राप्रामाण्यग्रहे चालिनीन्यायेन सर्वशाखानामप्रामाण्यापत्तौ ब्रह्मादिव्यासपर्यन्तैः स्वीकृतस्य प्रामाण्यस्यासम्भवापत्तेश्च ॥–॥ दृश्यन्ते हि याज्ञवल्क्यशाकलप्रभृतिमुनीनां विप्रतिपत्तयो विषयान्तरे, न तु वेदापौरुषेयत्वे ॥–किं च कालिदासादिग्रन्थेषु तत्तत्सर्गाद्यवसाने कर्त्तार उपलभ्यन्ते ॥–तथा वेदस्यापि पौरुषेयत्वे तत्तदध्यायसमाप्तौ ग्रन्थसमाप्तौ वा तत्कर्त्तृनामोपलभ्येत । न चोपलभ्यते । अतो वाक्यत्वहेतोः प्रतिकूलतर्कपराहतत्वेनापौरुषेयो वेद इति जैमिनीयैः साधितम् । किं च "वेदस्याध्ययनं सर्वं गुर्वध्ययनपूर्वकम् । वेदाध्ययनसामान्यादधुनाध्ययनं यथा " इत्यादिना वेदापौरुषेयत्वस्य निश्चेतुं शक्यत्वेन "धाता यथापूर्वमकल्पयद्" इत्यादिश्रुत्या यः कल्पः स कल्पपूर्व इति न्यायेन संसारस्यानादित्वादीश्वरस्य सर्वज्ञत्वादीश्वरो गतकल्पीयं वेदमस्मिन्कल्पे उपदिशतीत्येतावतैवोपपत्तौ प्रमाणान्तरेणार्थमुपलभ्य रचितत्वकल्पनानुपपत्तेश्च वैदिकशब्दानामनादित्वं सिध्यति ॥ ( **इयांस्तु विशेषः** )--यल्लोके सिद्धानामेव पदानां पौर्वापर्यानियमनमनङ्गीकृत्य यथेच्छं वाक्यानि प्रयुज्यन्ते कविभिः । तथा च वृद्धिसंज्ञासूत्रे भाष्ये "संस्कृत्य संस्कृत्य पदान्युत्सृज्यन्ते तेषां यथेष्टमभिसम्बन्धो भवति । यथा--आहर पात्रं, पात्रमाहरेति"इति॥वेदे तु नियतमेव पौर्वापर्यं, न केनापि परिवर्त्तयितुं शक्यते।।अत एव प्रतिवेदशाखं भिन्नान्येव प्रातिशाख्यानि तत्तन्मुनिभिः कृतानि वेदमर्यादासंरक्षणाय ।। अत एव लौकिकशब्देभ्यो विलक्षणार्थप्रतिपादका एव शब्दा वेदस्था निरूपिता निघण्टुनिरुक्तग्रन्थयोर्यास्केन ।। पुरुषकृतत्वे हि पुरुषबुद्धिदोषशङ्काकलुषितत्वेन प्रामाण्यं कैरपि न स्वीकृतं स्यात् ।। अत एव "मन्त्रायुर्वेदेषु तावदीश्वरप्रकाशितेषु प्रवृत्तिसामर्थ्यादर्थाव्यभिचारविनिश्चयात्प्रामाण्यं सिद्धम् ।। न चौषधिभेदानां तत्संयोगविशेषाणां च तत्तद्वर्णावापोद्धारेण सहस्रेणापि पुरुषायुषैर्लौकिकप्रमाणव्यवहारी शक्तः कर्तुमन्वयव्यतिरेकौ" इति योगवाचस्पत्ये उक्तम् । कल्पा-

न्तरीया वेदानुपूर्वी न भिद्यत इत्यभिप्रेत्य--"शब्दप्रधाना वेदाः" इति मम्मटेन सूचितम् ॥ **न चानु**पलब्धकर्त्तृका अन्येपि ग्रन्था बहवः स्युः। तेषामपि नित्यत्वेश्वरप्रकाशितत्वाद्यापत्तिरिति **वाच्यम्** ॥ तेषां वेदवत्प्रसिद्ध्यभावेन तादृशपुरुषार्थसाधनत्वाभावेन शिष्टपरिगृहीतत्वाभावेन चानुपादेयत्वस्य पामरैरपि वक्तुं शक्यत्वात् । अत एव "वेदोऽखिलो धर्ममूलम्" इति मनुवचनव्याख्यानावसरे "न हि मन्वाद्युपदेशसमधिगम्यं वेदस्य धर्ममूलत्वम् । अपि त्वबाधितविषयप्रतीतिजनकत्वेनापौरुषेयतया च । पुरुषसंसर्गदोषैरपि मिथ्याभिधानाशङ्काभावात्स्वतश्च शब्दस्यादुष्टत्वात्प्रत्यक्षवत्स्वतः प्रामाण्यसिद्धिः" इति मेधातिथिप्रभृतिभिरुक्तम् । अत एव साङ्ख्याद्यास्तिकदर्शनकाराणां सर्वेषां जगत्कारणविषये मिथो विप्रतिपत्तावपि वेदप्रामाण्यविषये लेशतोपि न सा । वेदोदितानुष्ठानस्य फलावश्यम्भावनिश्चयादेव—"देवा वै यद्यज्ञेऽकुर्वत तदसुरा अकुर्वत" इत्यादौ वेदवाक्येऽसुराणामपि तत्र प्रवृत्तिः श्रूयते ।

**ये त्वाधुनिकाः**—एतत्सर्वमनवधार्य स्वमतिप्रभवतर्कमात्रेणाप्रामाण्यव्यवस्थापनाय वेदस्य मनुष्यरचितत्वं कल्पयन्ति,सा कल्पना तेष्वेवास्तु । "भुक्त्वा वै सुखमास्थाय तदन्नं परिणामयेत् । इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ॥ १ ॥ बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरिष्यति" इत्यादिसर्वशिष्टपरिगृहीतस्मृत्यादिवचनैस्तेषां वेदानधिकारस्य बोधनेनाऽऽस्तिकमात्राणां तत्कल्पनायाः स्वीकरणस्यानुचितत्वादिति सिद्धमुक्तरीत्या वेदस्यापौरुषेयतया स्वतः प्रामाण्यम् । तस्माद्-"ध्रुवा द्यौर्ध्रुवा पृथिवि ध्रुवं विश्वमिदं जगद्" इतिवद्वेदानां ध्रुवत्वेश्वरप्रकाशितत्वसर्वज्ञकल्पत्वादिकं यद्व्यवस्थापितं तत्त्वदर्शिभिस्तत्र न किमपि बाधकमस्तीति सुधीभिरसकृद्विभाव्य निश्चेतव्यम् ॥-॥ **किं** चाधुनिकैरपि पाणिन्यादिमुनीनामतिकौशलमवगत्य तद्वचस्सु प्रामाण्यमुपगम्यते । तत्र पाणिनिना "तदशिष्यं संज्ञाप्रमाणत्वाद्" इत्यादिभिः सूत्रैः शब्दार्थसम्बधानामनादित्वं सूचितम् । "सिद्धे शब्दार्थ-

सम्बन्धे " " छन्दसि दृष्टानुविधिः " इत्यादि वदता कात्यायनेन तद्व्यक्तीकृतम् । " सिद्धशब्दो नित्यपर्यायवचनः " इत्यादिप्रकारेण भाष्यकृता पतञ्जलिना तद्व्याख्यातम् । भगवता जैमिनिनापि--"**चोदनालक्षणोऽर्थो धर्मः** " इत्याद्युक्त्वा शब्दार्थसम्बन्धानां नित्यत्वं " औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रमाणं बादरायणस्यानपेक्षत्वात्" इति सूचितम्॥

## शाबरभाष्यानुवादः ।

**तच्चात्र शबरस्वामिनैवं** भाषितम्-'औत्पत्तिकः'इति--नित्यं ब्रूमः। उत्पत्तिर्हि भाव उच्यते—लक्षणया । अपि युक्तः शब्दार्थयोर्भावः संबन्धः नोत्पन्नयोः पश्चात् सम्बन्धः—औत्पत्तिकः शब्दस्यार्थेन संबन्धः । ( **तस्य** ) अग्निहोत्रादिलक्षणस्य धर्मस्य निमित्तं प्रत्यक्षादिभिरनवगतस्य । **कथमुपदेशो** हि भवति । उपदेश इति—विशिष्टस्य शब्दस्योच्चारणम्, अव्यतिरेकश्च ज्ञानस्य । **न हि** तदुत्पन्नं ज्ञानं विपर्येति । **यच्च** नाम ज्ञानं न विपर्येति, न तच्छक्यते वक्तुं--न तदेवमिति यथा विज्ञायते न तथा भवति, यथैतन्न विज्ञायते तथैतदिति । अन्यदस्य हृदयेऽन्यद्वाचि स्यात् । एवं वदतो विरुद्धमिदं गम्यतेऽस्ति नास्ति वेति । तस्मात्—**तत्प्रमाणमनपेक्षत्वात्** । **न ह्येवं** सति प्रत्ययान्तरमपेक्षितव्यं पुरुषान्तरं वापि । अयं प्रत्ययो ह्यसौ । बादरायणग्रहणं **बादरायणस्य**--इदं मतं कीर्त्यते बादरायणं पूजयितुं, नात्मीयं मतं पर्युदसितुमिति स्वयं व्याख्यायाग्रे **वृत्तिकार**स्त्वन्यथेमं ग्रन्थं वर्णयां चकार—'तस्य निमित्तपरीष्टिः' इत्येवमादि । न परीक्षितव्यं निमित्तम् । प्रत्यक्षादीनि हि प्रसिद्धानि प्रमाणानि । तदन्तर्गतं च शास्त्रम् । अतस्तदपि न परीक्षितव्यम् ॥

"**अत्रोच्यते** ॥ व्यभिचारात्परीक्षितव्यम् । शुक्तिका हि रजतवत्प्रकाशते यतः-तेन प्रत्यक्षं व्यभिचरति । तन्मूलत्वाच्चानुमानादीन्यपि । तत्रापरीक्ष्य प्रवर्तमानोऽर्थाद्विहन्येत । अनर्थं चाप्नुयात्कदाचित्। **नैतदेवम्**।यत्प्रत्यक्षं न तद्व्यभिचरति यद्व्यभिचरति न तत्प्रत्यक्षम्।**किं तर्हि प्रत्यक्षम्** । " सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्र-

**त्यक्षम्** " यद्विषयं ज्ञानं तेनैव सम्प्रयोगे इन्द्रियाणां पुरुषस्य बुद्धिजन्म तत्प्रत्यक्षम्। यदन्यविषयज्ञानमन्यसम्प्रयोगे भवति न तत्प्रत्यक्षम्। **कथं पुनरिदमवगम्यते**--इदं तत्सम्प्रयोगे, इदमन्यसम्प्रयोग इति। यन्नान्यसम्प्रयोगे तत्तत्सम्प्रयोगे, **एत**द्विपरीतमन्यसम्प्रयोग इति। **कथं ज्ञेयम्**। शुक्तिकायामपि रजतं मन्यमानो रजत-सन्निकृष्टं मे चक्षुरिति मन्यते। बाधकं हि यत्र ज्ञानमुत्पद्यते नैतदेवं मिथ्याज्ञानमिति तदन्यसम्प्रयोगे, विपरीतं तत्सम्प्रयोग इति। प्राग्बाधकज्ञानोत्पत्तेः कथमवगम्यते यदा न तत्काले सम्यग् ज्ञानस्य, मिथ्याज्ञानस्य वा,-कश्चिद्विशेषः। **यदा** हि चक्षुरादिभिरुपहतं मनो भवतीन्द्रियं वा तिमिरादिभिः सौक्ष्म्यादिभिर्बाह्यो वा विषयः **ततो** मिथ्याज्ञानम्। अनुपहतेषु हि सम्यग् ज्ञानम्। इन्द्रियमनोऽर्थसंनिकर्षो हि सम्यक् ज्ञानस्य हेतुः। दुष्टेषु हि ज्ञानं मिथ्या भवति। **कथमवगम्यते**। दोषापगमे सम्प्रतिपत्तिदर्शनात्। **कथं** दुष्टादुष्टावगम इति **चेत्**। प्रयत्नेनान्विच्छन्तो न चेद्दोषमवगच्छेमहि प्रमाणाभावाददुष्टमिति मन्येमहि। तस्माद्यस्य च दुष्टं करणं, यत्र च मिथ्येति प्रत्ययः,—स एवासमीचीनः प्रत्ययो नान्य इति॥

"**ननु** सर्व एव निरालम्बनः स्वप्नवत्प्रत्ययः। प्रत्ययस्य हि निरालम्बनतास्वभाव उपलक्षितः स्वप्ने,जाग्रतोऽपि--स्तम्भः इति वा कुडचमिति वा प्रत्यय एव भवति। तस्मात्सोऽपि **निरालम्बन उच्यते**। स्तम्भ इति जाग्रतो बुद्धिः सुपरिनिश्चिता कथं विपर्यसिष्यतीति। स्वप्नेऽप्येवमेव सुपरिनिश्चिताऽसीत्प्राक् प्रबोधनात्। न तत्र कश्चिद्विशेष इति॥

**न**॥स्वप्ने विपर्ययदर्शनात्। **अविपर्ययाच्चे**तरस्मिंस्तत्सामान्यादितरत्रापि भविष्यतीति **चेत्**।**यदि** प्रत्ययत्वात्स्वप्नप्रत्ययस्य मिथ्याभावः, जाग्रत्प्रत्ययस्यापि तथा भवितुमर्हति।**अथ** प्रतीतिस्तथाभावस्य हेतुर्न शक्यते प्रत्ययत्वादयमन्य इति वक्तुम्।अन्यतस्तुस्वप्नप्रत्ययस्य मिथ्याभावो विपर्ययादवगतः। **कुत इति चेत्**। सनिद्रस्य मनसो दौर्बल्यान्निद्रा मिथ्याभावस्य हेतुः। स्वप्नादौ स्वप्नान्ते च विपर्ययात्सुषुप्तस्याभाव एव।

अचेतयन्नेव हि **सुषुप्त** इत्युच्यते।तस्माज्जाग्रतः प्रत्ययो न मिथ्येति ॥ **ननु** जाग्रतोऽपि करणदोषः स्यात् । **यदि** स्याद् गम्येत । **स्वप्नदर्श**, नकालेऽपि नावगम्यत इति **चेत्**। तत्र प्रबुद्धो ह्यवगच्छति निद्राक्रान्तं मे मन आसीदिति । **शून्यस्तु--कथम्** अर्थज्ञानयोराकारभेदं नोपलभामहे । प्रत्यक्षा च नो बुद्धिः । अतस्तद्भिन्नमर्थरूपं नाम न किंचिदस्तीति पश्यामः ॥

"स्यादेतदेवं **यद्य**र्थाकारा बुद्धिःस्यात् । निराकारा तु नो बुद्धिः । आकारवान्बाह्योऽर्थः । स हि बहिर्देशसम्बद्धः प्रत्यक्षमुपलभ्यते । अर्थ-विषया हि प्रत्यक्षबुद्धिर्न बुध्यन्तरविषया।क्षणिका हि सा, न बुध्यन्तर-कालमवस्थास्यत इति उत्पद्यमानैवासौ ज्ञायते ज्ञापयति चार्थान्तरं प्रदीपवदिति **यदुच्येत ॥ तन्न ॥** न ह्यज्ञातेऽर्थे कश्चिद्बुद्धिमुपल-भते । ज्ञाते त्वनुमानादवगच्छति । तत्र यौगपद्यमनुपपन्नम् ॥ **ननू**त्प न्नायामेव बुद्धौ ज्ञातोऽर्थ इत्युच्यते, नानुत्पन्नायाम् । अतः पूर्वं बुद्धिरुत्पद्यते । पश्चाज्ज्ञातोऽर्थः **॥ सत्यम्॥** पूर्वं बुद्धिरुत्पद्यते, न तु पूर्वं ज्ञायते।भवति हि कदाचिदेतत्—ज्ञातोऽप्यर्थः सन्न ज्ञात इत्युच्येत। **न चा**र्थव्यपदेशमन्तरेण बुद्धे रूपोपलम्भनम् । तस्मान्न व्यपदेश्या बुद्धिः । अव्यपदेश्यं च प्रत्यक्षम् । तस्मादप्रत्यक्षा बुद्धिः ॥–॥ **अपि च** काममेकरूपत्वे बुद्धेरेवाभावो, नार्थस्य प्रत्यक्षस्य सतः ॥ **न** चैक-रूप्यम्।अनाकारामेव हि बुद्धिमनुमिमीमहे । साकारं चार्थं प्रत्यक्षमेवाव-गच्छामः ॥ तस्मादर्थालम्बनः प्रत्ययः **॥ अपि च** नियतनिमि-त्तस्तन्तुष्वेवोपादीयमानेषु पटप्रत्ययः । इतरथा तन्त्वादानेऽपि कदाचि-द्घटबुद्धिरविकलेन्द्रियस्य स्यात् ॥ **न चै**वमस्ति॥अतो न निरालम्बन प्रत्ययः । अतो न व्यभिचरति प्रत्यक्षम् ।

"**(अनुमानं)** ज्ञातसबन्धस्यैकदेशदर्शनादेकदेशान्तरे सन्निकृष्टेर्थे बुद्धिः ।तत्तु द्विविधं—प्रत्यक्षतो दृष्टसम्बन्धं, सामान्यतो दृष्टसम्बन्धं च। प्रत्यक्षतो दृष्टसम्बन्धं-**यथा**—धूमाकृतिदर्शनादग्न्याकृतिविज्ञानम् सामान्यतो दृष्टसम्बन्धं—**यथा**-देवदत्तस्य गतिपूर्विकां देशान्तरप्राप्ति-मुपलभ्यादित्यगतिस्मरण ।

**शास्त्रम्**–शब्दविज्ञानादसन्निकृष्टेऽर्थे विज्ञानम् ।

**उपमानमपि**–सादृश्यमसन्निकृष्टेऽर्थे बुद्धिमुत्पादयति । **यथा**--गवयदर्शनं गोस्मरणस्य ।

**अर्थापत्तिरपि**–दृष्टः श्रुतो वाऽर्थोऽन्यथा नोपपद्यत इत्यर्थ-कल्पना । **यथा**--जीवति देवदत्ते गृहाभावदर्शनेन बहिर्भावस्या-दृष्टस्य कल्पना ।

**अभावोऽपि**–प्रमाणाभावो नास्तीत्यस्यार्थस्यासन्निकृष्टस्य । तस्मात्प्रसिद्धत्वान्न परीक्षितव्यं निमित्तम् ।

"**ननु** प्रत्यक्षादीन्यन्यानि भवन्तु नाम प्रमाणानि । शब्दस्तु न प्रमा-णम् । **कुतः**।"अनिमित्तं विद्यमानोपलम्भनत्वात्" । अनिमित्तमप्रमाणं शब्दः। योऽप्युपलम्भनविषयः नोपलभ्यते, स नास्ति। यथा--शशस्य विषाणम्। उपलम्भकानि चेन्द्रियाणि पश्वादीनाम्। **न** च पशुकामेष्टयनन्तरं पशव उपलभ्यन्ते । अतो नेष्टिः पशुफला । कर्मकाले च फलेन भवितव्यम् । यत्कालं हि मर्दनं तत्काले मर्दनसुखम् । **कालान्तरे** फलं दास्यतीति **चेन्न** । कालान्तरे फलमिष्टेरित्यवगच्छामः । **कुतः** । **यदा** तावद-विद्यमानासीत्, **तदा** फलं न दत्तवती । **यदा** फलमुत्पद्यते, **तदा**-सौ नास्ति । असती कथं दास्यति, प्रत्यक्षं च फलकारणमन्यदुपल-भामहे । **न च** दृष्टकारणे सत्यदृष्टं कल्पयितुं शक्यते । प्रमाणाभा-वात् ॥ **एवं** दृष्टापचारस्य वेदस्य स्वर्गाद्यपि फलं न भवतीति मन्या-महे । दृष्टविरुद्धमपि भवति किंचिद्वचनम् । पात्रचयनं विधाया ह "स एष यज्ञायुधी यजमानोऽञ्जसा स्वर्गं लोकं याति" इति प्रत्यक्षं शरी-रकं व्यपदिशति । **न च** तत्स्वर्गं लोकं यातीति । प्रत्यक्षं हि तद्दह्यते । **न चैष** यातीति विधिशब्दः । **एवंजातीयकं** प्रमाणविरुद्धं वचनम-प्रमाणम्। अम्बुनि मज्जन्त्यलाबूनि, ग्रावाणः प्लवन्त इति यथा, तत्सामा-न्यादग्निहोत्रादिचोदनास्वप्यनाश्वासः । **तस्मान्न चोदनाल-क्षणोऽर्थो धर्मः** ॥

"औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धस्तस्य ज्ञानम् "। तुशब्दः पक्षं व्यावर्त्तयति। अपौरुषेयः शब्दस्यार्थेन सम्बन्धः ( तस्य ) अग्निहोत्रादिलक्षणस्यार्थस्य **ज्ञानं** प्रत्यक्षादिभिरनवगम्यमानस्य। तथा च चोदनालक्षणः सम्यक्सम्प्रत्यय इति। पौरुषेये हि शब्दे यः प्रत्ययस्तस्य मिथ्याभाव आशङ्क्येत। परप्रत्ययो हि तदा स्यात्। **अथ** शब्दे ब्रुवति **कथं** मिथ्येति। **न हि** तदानीमन्यतः पुरुषादवगतिमिच्छामः। ब्रुवीतीत्युच्यते। बोधयति बुध्यमानस्य निमित्तं भवतीति शब्दे च निमित्ते स्वयं बुध्यते। **कथं** विप्रलब्धं ब्रूयान्नैतदेवमिति। **न चास्य** चोदना स्याद्वा न वेति सांशयिकं प्रत्ययमुत्पादयति। **न च** मिथ्यैतदिति कालान्तरे देशान्तरेऽवस्थान्तरे पुरुषान्तरे वा पुनरव्यपदेश्यप्रत्ययो भवति। योऽप्यस्य प्रत्ययविपर्यासं दृष्ट्वात्रापि विपर्यासिष्यत्यानुमानिकः प्रत्यय उत्पद्यते, सोप्यनेन प्रत्यक्षेण प्रत्ययेन विरुध्यमानो बाध्यते। तस्माच्चोदनालक्षण एव **धर्मः**।

**स्यादेतदेवं**—नैव शब्दस्यार्थेन सम्बन्धः—कुतोऽस्य पौरुषेयताऽपौरुषेयता वेति। **कथम्।** स्याच्चेदर्थेन सम्बन्धः क्षुरमोदकशब्दोच्चारणे मुखस्य पाटनपूरणे स्याताम्। **यदि** संश्लेषलक्षणं सम्बन्धमभिप्रेत्योच्यते। कार्यकारणनिमित्तनैमित्तिकाश्रयाश्रयिभावसंयोगादयस्तु सम्बन्धाः शब्दस्यानुपपन्ना एवेति। **उच्यते॥** यो ह्यत्र व्यपदेश्यः सम्बन्धस्तमेकं न व्यपदिशति भवान्प्रत्याय्यस्य प्रत्यायकस्य च यः सञ्ज्ञासञ्ज्ञिलक्षण इति। **आह। यदि** प्रत्यायकः शब्दः प्रथमश्रुतः किं न प्रत्याययति। **उच्यते।** सर्वत्र नो दर्शनं प्रमाणम्। प्रत्यायक इति हि प्रत्ययं दृष्ट्वावगच्छामो न प्रथमश्रुत इति। प्रथमश्रवणे प्रत्ययमदृष्ट्वा यावत्कृत्वः श्रुतेनेयं संज्ञाऽयं संज्ञीत्यवधारितं भवति, तावत्कृत्वः श्रुतादर्थावगम इति। यथा चक्षुः—द्रष्टृ न बाह्येन प्रकाशेन विना प्रकाशयतीत्यद्रष्टृ न भवति। **यदि** प्रथमश्रुतो न प्रत्याययति, कृतकः **तर्हि** शब्दस्यार्थेन सम्बन्धः। **कुतः।** स्वभावतो ह्यसम्बन्धावेतौ शब्दार्थौ। मुखे हि शब्दमुपलभामहे। भूमावर्थम्। शब्दोयं न त्वर्थोऽर्थोऽयं न

शब्द इति च व्यपदिशन्ति । रूपभेदोपि भवति--गौरितीमं शब्द-मुच्चारयन्ति, सास्नादिमन्तमर्थमवबुध्यन्त इति । पृथग्भूतयोश्च यः सम्बन्धः, स कृतको दृष्टः । यथा--रज्जुघटयोरिति ॥

" अथ गौरित्यत्र कः शब्दः । गकारौकारविसर्जनीयाः " इति **भगवानुपवर्षः।** श्रोत्रग्रहणे ह्यर्थे लोके शब्दशब्दः प्रसिद्धः । ते च श्रोत्रग्रहणाः । **यद्येवम**र्थप्रत्ययो नोपपद्यते । **कथम्** । एकैकाक्षर-विज्ञानेर्थो नोपलभ्यते ॥ **न चाक्ष**रव्यतिरिक्तोऽन्यः कश्चिदस्ति समु-दायो नाम । यतोऽर्थप्रतिपत्तिः स्यात् । **यदा** गकारः न **तदौ**कार-विसर्जनीयौ । **यदौ**कारविसर्जनीयौ, न **तदा** गकारः । अतो गका-रादिव्यतिरिक्तोऽन्यो गोशब्दोऽस्ति, यतोऽर्थप्रतिपत्तिः स्यात् । **अन्त-**र्हिते शब्दे स्मरणादर्थप्रतिपत्तिश्चेत् । **न** । स्मृतेरपि क्षणिकत्वादक्षरै-स्तुल्यता । पूर्ववर्णजनितसंस्कारसहितोन्त्यवर्णः प्रत्यायक इत्यदोषः ॥ **नन्वेवं** शब्दादर्थं प्रतिपद्यामहे इति लौकिकं वचनमनुपपन्नं स्यात् ॥ **उच्यते । यदि** नोपपद्यते, अनुपपन्नं नाम । **न हि** लौकिकं वचनमनुपपन्नमित्येतावता प्रत्यक्षादिभिरनवगम्यमानोऽर्थः शक्योत्युपग-न्तुम् । लौकिकानि वचनान्युपपन्नार्थान्यनुपपन्नार्थानि च दृश्यन्ते । यथा—देवदत्त गामभ्याजेत्येवमादीनि, दश दाडिमानि षडपूपा इत्येवमा-दीनि च ॥–॥ **ननु** च शास्त्रकारा अप्येव**माहुः**—पूर्वापरीभूतं भावमाख्यातेनाचष्टे—व्रजति पचतीत्युपक्रमप्रभृत्यपवर्गपर्य्यन्तमिति **यथा॥न॥** शास्त्रकारवचनमप्यलमिममर्थमप्रमाणकमुपपादयितुम्॥–॥ **अपि च** नैवैतदनुपपन्नार्थम्—अक्षरेभ्यः संस्कारः संस्कारादर्थप्रतिपत्तिरि-ति संभवति ॥ अर्थप्रतिपत्तावक्षराणि निमित्तम् । **गौण** एवार्थप्रतिपत्तौ शब्द इति **चेत् ॥ न ॥** गौणोऽक्षरेषु निमित्तभावः । तद्भावे भावा-त्तदभावे चाभावात् ॥

"**अथापि** गौणः स्यात् । **न ॥** गौणः शब्दः मा भूदिति प्रत्यक्षा-दिभिरनवगम्यमानोऽर्थः शक्यः परिकल्पयितुम् । न ह्यग्निर्माणवक इत्युक्तेऽग्निशब्दो गौणो मा भूदिति ज्वलन एव माणवक इत्यध्यवसी-

यते। **न च** प्रत्यक्षो गकारादिभ्योऽन्यो गोशब्द इति। भेददर्शनाभावादभेददर्शनाच्च । गकारादीनि हि प्रत्यक्षाणि । **तस्माद्गौरि**ति गकारादिविसर्जनीयान्तं पदमक्षराण्येव । अतो न तेभ्यो व्यतिरिक्तमन्यत्पदं नामेति ॥–॥ **ननु** संस्कारकल्पनायामप्यदृष्टकल्पना ॥ **उच्यते** ॥ शब्दकल्पनायां–साच, शब्दकल्पना च । तस्मादक्षराण्येव पदम् । **अथ** गौरित्यस्य शब्दस्य **कोऽर्थः**। सास्नादिविशिष्टाकृतिरिति **ब्रूमः** ॥–॥ **नन्वाकृतिः** साध्याऽस्ति वा न वेति ॥ **न** ॥ प्रत्यक्षा सती साध्या भवितुमर्हति । रुचकः स्वस्तिको वर्द्धमानक इति हि प्रत्यक्षं दृश्यते॥ **व्यामो**ह इति **चेन्न** ॥ नासति प्रत्ययविपर्यासे व्यामोह इति शक्यते वक्तुम् ॥–॥ असत्यप्यर्थान्तर एवञ्जातीयको भवति प्रत्ययः । पङ्क्तिर्यूथं वनमिति यथेति **चेत्** ॥ **न** ॥ असम्बद्धमिदं वचनमुपन्यस्तम् । किमसति वने वनप्रत्ययो भवतीति । प्रत्यक्षमेवाक्षिप्यते वृक्षा अपि न सन्तीति ॥ **यद्येवं**, प्रत्युक्तः स माहाजनिकः पक्षः ॥ ॥–॥ **अथ** किमाकृतिसद्भाववाद्युपालभ्यते सिद्धान्तान्तरं ते दुष्यतीति–वनेऽपि सति वनप्रत्ययः प्राप्नोतीति ॥ एवमपि प्रकृतं दूषयितुमशक्नुवतस्तत्सिद्धान्तान्तरदूषणे निग्रहस्थानमापद्यते । असाधकत्वात् । स हि वक्ष्यति–दुष्यतु, **यदि** दुष्यति–किं तेन दुष्टेनादुष्टेन वा प्रकृतं त्वया साधितं भवति, मदीयो वा पक्षो दूषितो भवतीति । **न च** वृक्षव्यतिरिक्तं वनं यस्मान्नोपलभ्यतेऽतो वनं नास्तीत्यवगम्यते। **यदि** वनेऽन्येन हेतुना सद्भावविपरीतः प्रत्यय उत्पद्यते–मिथ्यैव वनप्रत्यय इति। **ततो** वनं नास्तीत्यवगच्छामः ॥ **न च** गवादिषु प्रत्ययो विपर्येति । अतो वैषम्यम् । **अथ** वनादिषु नैव विपर्येति न ते न सन्तीति । तस्मादसम्बद्धः पङ्क्तिवनोपन्यासः । **अत उपपन्नं जैमिनिवचनम्**–आकृतिः शब्दार्थ इति । यथा चाकृतिः शब्दार्थस्तथोपरिष्टान्निपुणतरमुपपादयिष्याम इति ॥

---

१ ( अ० १ पा० ३ )

“**अथ सम्बन्धः क इति ॥** यच्छब्दे विज्ञातेऽर्थो विज्ञायते—स तु कृतक इति पूर्वमुपपादितम् । तस्मान्मन्यामहे केनापि पुरुषेण शब्दानामर्थैः सह सम्बन्धं कृत्वा संव्यवहर्तुं वेदाः प्रणीता इति । **तदिदानी** मुच्यते—अपौरुषेयत्वात्संबन्धस्य सिद्धमिति । **कथं पुनरिदमवगम्यते**—अपौरुषेय एष सम्बन्ध इति ॥ पुरुषस्य सम्बन्धुरभावात् । **कथं संबधो** नास्ति । प्रत्यक्षस्य प्रमाणस्याभावात्, तत्पूर्वकत्वाच्चेतरेषाम्॥**ननु** चिरवृत्तत्वात्प्रत्यक्षस्याविषयो भवेदिदानीन्तनानाम्॥**न हि** चिरवृत्तः **सन्न** स्मर्येत । **न च** हिमवदादिषु कूपारामादिवदस्मरणं भवितुमर्हति । पुरुषवियोगो हि तेषु भवति—देशोत्सादेन, कुलोत्सादेन वा । **न च** शब्दार्थव्यवहारवियोगः पुरुषाणामस्ति ॥ **स्यादेतत्**—सम्बन्धमात्रव्यवहारिणो निष्प्रयोजनं कर्तृस्मरणमनाद्रियमाणा विस्मरेयुरिति ॥ **तन्न** ॥ **यदि** हि पुरुषः कृत्वा सम्बन्धं व्यवहारयेद्व्यवहारकालेऽवश्यं स्मर्तव्यो भवति । सम्प्रतिपत्तौ हि कर्तृव्यवहर्त्रोरर्थः सिध्यति। न विप्रतिपत्तौ । न हि वृद्धिशब्देनापाणिनेर्व्यवहारत आदैचः प्रतीयेरन्, पाणिनिकृतिमननुमन्यमानस्य वा । **तथा** मकारेणापिङ्गलस्य न सर्वगुरुस्त्रिकः प्रतीयेत, पिङ्गलकृतिमननुमन्यमानस्य वा । तेन कर्तृव्यवहर्तारौ सम्प्रतिपद्येते । तेन वेदे व्यवहरद्भिरवश्यं स्मरणीयः सम्बन्धस्य कर्ता स्याद्व्यवहारस्य च।**न हि** विस्मृते “ वृद्धिरादैच्” इत्यस्य सूत्रस्य कर्तरि “ वृद्धिर्यस्याचामादिः—” इति किञ्चित्प्रतीयेत । तस्मात्कारणादवगच्छामो न कृत्वा सम्बन्धं व्यवहारार्थं केनचिद्वेदाः प्रणीता इति॥**यद्यपि** च विस्मरणमुपपद्येत।**तथापि** न प्रामाणमन्तरेण सम्बन्द्धारं प्रतिपद्येमहि । यथा--विद्यमानस्याप्यनुपलम्भनं भवतीति नैतावता विना प्रमाणेन शशविषाणं प्रतिपद्यामहे ॥ तस्मादपौरुषेयः शब्दस्यार्थेन सम्बन्ध इति ॥--॥ **नन्वर्था**पत्त्या सम्बन्द्धारं प्रतिपद्येमहि । न ह्यकृतसम्बन्धाच्छब्दादर्थं प्रतिपद्यमानानुपलभामहे । प्रतिपद्येरंश्चेत्प्रथमश्रवणेऽपि प्रतिपद्येरन् । तदनुपलम्भनादवश्यं भवितव्यं सम्बन्धेति **चेत** ॥ **न** ॥ सिद्धवदुपदेशात । **यदि** सम्बन्धुरभावान्नि-

योगतो नार्था उपलभ्येरन्, **ततो**ऽर्थापत्त्या सम्बन्द्धारमवगच्छामः । अस्ति त्वन्यः प्रकारो वृद्धानां स्वार्थेन संव्यवहरमाणानामुपशृण्वन्तो बालाः प्रत्यक्षमर्थं प्रतिपद्यमाना दृश्यन्ते । तेऽपि वृद्धा **यदा** बाला आसंस्तदाऽन्येभ्यो वृद्धेभ्यस्तेऽप्यन्येभ्य इति नास्त्यादिरित्येवं वा भवेत् । **अथ वा** न कश्चिदेकोऽपि शब्दस्यार्थेन सम्बन्ध आसीदथ केनचित्संबन्धाः प्रवर्तिता इति । अत्र वृद्धव्यवहारे सति नार्थादापद्येत सम्बन्धस्य कर्त्ता ॥–॥ **अपि च** व्यवहारवादिनः प्रत्यक्षमुपदिशन्ति कल्पयन्तीतरे सम्बन्द्धारम् । **न च** प्रत्यक्षे प्रत्यर्थिनि कल्पना साध्वी । तस्मात्सम्बद्धुरभावः । (अव्यतिरेकश्च)–यथाऽस्मिन्देशे, सास्नादिमति गोशब्दः । एवं सर्वेषु दुर्गमेष्वपि । बहवः सम्बन्द्धारः कथं संगंस्यन्ते । एको न शक्नुयात् । अतो नास्ति सम्बन्धस्य कर्त्ता । **अपर आह**–(अव्यतिरेकश्च)–न हि सम्बन्धव्यतिरिक्तः कश्चित्कालोऽस्ति । यस्मिन्न कश्चिदपि शब्दः केनचिदर्थेन सम्बद्ध आसीत् । **कथम्** । सम्बन्धाक्रियैव हि नोपपद्यते । अवश्यमनेन सम्बन्धं कुर्वता केनचिच्छब्देन कर्तव्यः । **येन** क्रियेत, **तस्य** तेन कृतः । अथान्येन केनचित्कृतः, तस्य केनेति, तस्य केनेति नैवावतिष्ठते । तस्मादवश्यमनेन सम्बन्धं कुर्वताऽकृतसम्बन्धाः केचन शब्दा वृद्धव्यवहारसिद्धा अभ्युपगन्तव्याः । अस्ति चेद्व्यवहारसिद्धिर्न नियोगतः सम्बन्द्धा भवितव्यमित्यर्थापत्तिरपि नास्ति ॥

**स्यादेतत्**–अप्रसिद्धसम्बन्धा बालाः कथं वृद्धेभ्यः प्रतिपद्यन्त इति नास्ति दृष्टेऽनुपपन्नं नाम।दृष्टा हि बाला वृद्धेभ्यः प्रतिपद्यमानाः । न च प्रतिपन्नसम्बन्धाः सम्बन्धस्य कर्तुः।तस्माद्वैषम्यम्।"अर्थेऽनुपलब्धे" अनुपलब्धे च देवदत्तादावर्थेऽनर्थकं संज्ञाकरणम्, अशक्यं च। विशेषान्प्रतिपत्तुं हि संज्ञाः क्रियन्ते, विशेषांश्चोद्दिश्य । तद्विशेषेष्वज्ञायमानेषूभयमप्यनवक्लृप्तम् । तस्मादपौरुषेयः शब्दस्यार्थेन सम्बन्धः । अतश्च तत्प्रमाणम्।अनपेक्षत्वात् ॥ **न चैवं** सति पुरुषान्तरं प्रत्ययान्तरं चापेक्ष्यते ॥ तस्माच्चोदनालक्षण एव धर्मो नान्यलक्षण इति बादरायणग्रह-

णमुक्तम् । **अथ** यदुक्तमनिमित्तं शब्दः । कर्मकाले फलादर्शनात्कालान्तरे च कर्माभावात्प्रमाणं नास्तीति ॥ **तदुच्यते** । न स्यात्प्रमाणं, यदि पञ्चैव प्रमाणान्यभविष्यन् । येनयेन हि प्रमीयते तत्तत्प्रमाणम् । शब्देनापि प्रमीयते, ततः शब्दोऽपि प्रमाणं, यथैव प्रत्यक्षम् । **न च** प्रमाणेनावगतं प्रमाणान्तरेणानवगतमित्येतावताऽनवगतं भवति । **न चैवं** श्रूयते–कृते कर्मणि तावतैव फलं भवति । किं तु कर्मणः फलं प्राप्यत इति ॥ **यच्च** कालान्तरे फलस्यान्यत्प्रत्यक्षं कारणमस्तीति॥ **नैष दोषः ।** तच्चैव हि तत्र कारणं शब्दश्चेति।।**यत्तु** प्रत्यक्षविरुद्धं वचनमुपन्यस्तं "स एष यज्ञायुधी यजमानोऽञ्जसा स्वर्गं लोकं याति" इति प्रत्यक्षं शरीरकं व्यपदिशतीति॥ **तदुच्यते**॥शरीरसम्बन्धाद्यस्य तच्छरीरं सोऽपि तैर्यज्ञायुधैर्यज्ञायुधीत्युच्यते ॥ आह–कोसावन्यो, नैनमुपलभामहे। प्राणादिभिरेनमुपलभामहे–योऽसौ प्राणित्यपानित्युच्छ्वसिति निमिषतीत्यादिचेष्टितवान्सोऽत्र शरीरे यज्ञायुधीति ॥ **ननु** शरीरमेव प्राणित्यपानिति च ॥ **न** ॥ प्राणादयः शरीरगुणविधर्माणः । अयावच्छरीरभावित्वात् । यावच्छरीरं तावदस्य गुणा रूपादयः । प्राणादयस्तु सत्यपि शरीरे न भवन्ति । सुखादयश्च स्वयमुपलभ्यन्ते, न रूपादय इव शरीरगुणाः परेणापीति । तस्माच्छरीरगुणवैधर्म्यादन्यः शरीराद्यज्ञायुधीति । आह–**कुत** एष सम्प्रत्ययः–सुखादिभ्योन्यस्तद्वानस्तीति । न हि सुखादिप्रत्याख्यानेन तस्य स्वरूपमुपलभामहे । तस्माच्छशविषाणवदसौ नास्ति ॥ **अथोच्येत**–तेन विना कस्य सुखादय इति । न कस्यचिदपीति **वक्ष्यामः ।** न हि योय उपलभ्यते तस्यतस्य सम्बन्धिना भवितव्यम् । यस्य सम्बन्धोप्युपलभ्यते सम्बन्धी च तस्यायं सम्बन्धीति गम्यते । न हि चन्द्रमसमादित्यं वोपलभ्य सम्बन्धान्वेषणा भवति कस्यायमिति, न कस्यचिदपीत्यवधार्यते । तस्मान्न सुखादिभ्योऽन्यस्तद्वानस्तीति । अथोपलब्धस्यावश्यं कल्पयितव्यः सम्बन्धी भवति । तत आत्मानमप्यनेन प्रकारेणोपलभ्य कस्यायमिति सम्बन्ध्यन्तरमन्विष्येम–तमपि कल्पयित्वाऽन्य-

मपि कल्पयित्वाऽन्यमित्यव्यवस्थैव स्यात्। अथ कश्चिकल्पयित्वा न सम्बन्धयतरमपि कल्पयिष्यसि, तावत्येव विरंस्यसि, तावता च परितोष्यसि, ततो विज्ञान एव परितुष्य तावत्येव विरन्तुमर्हसि।

**अत्रोच्यते॥** यदि विज्ञानादन्यो नास्ति, कस्तर्हि जानातीति। **उच्यते॥** ज्ञानस्य कर्त्तुरभिधानमनेन शब्देनोपपद्यते। तदेष शब्दोऽर्थवान्कर्तव्य इति ज्ञानाद्व्यतिरिक्तमात्मानं कल्पयिष्याम इति।आह—वेदा एनं शब्दमर्थवन्तं कल्पायिष्यन्ति। यदि कल्पयितव्यं प्रमंस्यन्ते, बहवः खल्विह जना अस्त्यात्मास्त्यात्मेत्यात्मसत्तावादिन एव शब्दस्य प्रत्यक्षवक्तारो भवन्ति। **तथापि** नात्मसत्तां कल्पयितुं घटन्ते। **किमङ्ग** पुनर्जानातीति। परोक्षशब्ददर्शनात्॥तस्मादसदेतत्॥**उच्यते॥** इच्छयाऽत्मानमुपलभामहे। **कथमिति।** उपलब्धपूर्वेऽभिप्रेते भवतीच्छा। यथा—मेरुमुत्तरेण यान्यस्मज्जातीयैरनुपलब्धपूर्वाणि स्वादूनि वृक्षफलानि न तानि प्रत्यस्माकमिच्छा भवति। नो खल्वन्येन पुरुषेणोपलब्धेऽपि विषयेऽन्यस्योपलब्धुरिच्छा भवति। भवति चान्येद्युरुपलब्धेऽन्येद्युरिच्छा। तेनोपलम्भनेन समानकर्तृका सेत्यवगच्छामः। **यदि** विज्ञानमात्रमेवेदमुपलम्भकमभविष्यत्,प्रत्यस्ते तस्मिन्कस्यापरेद्युरिच्छाऽभविष्यत् ॥—॥ **अथ** न विज्ञानादन्यो विज्ञाता नित्यः। तत एकस्मिन्नहनि य एवोपलब्धा परेद्युरपि स एवैषिष्यतीति। इतरथा हीच्छा नोपपन्ना स्यात्। **अत्रोच्यते॥**अनुपपन्नमिति नः क—सम्प्रत्ययो—यन्न प्रमाणेनावगतम्। विज्ञानात्तावदन्यं नोपलभामहे। यन्नोपलभामहे तच्छशविषाणवदेव नास्तीत्यवगच्छामः। **न च** तस्मिन्नसति विज्ञानसद्भावोऽनुपपन्नः। प्रत्यक्षावगतत्वादेव। क्षणिकत्वं चास्य प्रत्यक्षपूर्वकमेव। **न च** ज्ञातरि विज्ञानादन्यस्मिन्नसति ज्ञाने चानित्येऽपरेद्युरिच्छाऽनुपपन्ना। प्रत्यक्षावगतत्वादेव। नो खल्वप्येतद्दृष्टं—य एवान्येद्युरुपलब्धा स एवान्येद्युरेषितेति। इदं तु दृष्टं—यत्कचिदन्येन दृष्टमन्य इच्छति। क्वचिन्न—समानायां सन्ततावन्य इच्छति, सन्तत्यन्तरं नेच्छतीति॥ तस्मान्न सुखादिव्यतिरिक्तोऽन्योऽस्तीति॥ **अत्रोच्यते॥** न ह्यस्म-

त्तार इच्छन्तीत्युपपद्यते । न वाऽदृष्टपूर्वे स्मृतिर्भवति ॥ तस्मात्क्षणिकविज्ञानस्कन्धमात्रे स्मृतिरनुपपन्नेति ॥ अत्राह—स्मृतिरपीच्छावत्पूर्वज्ञानसदृशं विज्ञानं, पूर्वविज्ञानविषयं वा स्मृतिरित्युच्यते । तच्च द्रष्टरि विनष्टेप्यपरेद्युरुत्पद्यमानं नानुपपन्नम् । प्रत्यक्षावगतत्वादेवान्यस्मिन्स्कन्धघनेऽन्येन स्कन्धघनेन यज्ज्ञानं तत्सन्ततिजनान्येनोपलभ्यते नातत्सन्ततिजेनान्येन ॥ तस्माच्छून्याः स्कन्धघना इति ॥ **अथास्मिन्नर्थे** ब्राह्मणं भवति—" विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्ति " [ बृ० । २ । ४ । १२ ] इति ॥ **उच्यते—नैतदेवम्** ॥ अन्येद्युर्दृष्टेऽपरेद्युर्दृष्टेऽपरेद्युरहमिदमदर्शमिति भवति प्रत्ययः । प्रत्यगात्मनि चैतद्भवति, न परत्र । अपराह्णेऽसावन्येद्युर्दृष्टवान् । तस्मात्तद्व्यतिरिक्तोऽन्योऽस्ति यत्रायमहंशब्दः ॥ **आह**—परत्राप्यहंशब्दो भक्त्या दृश्यते—यथाऽहमेव पुत्रोऽहमेव देवदत्तोऽहमेव गच्छामीति ॥ **अत्रोच्यते**॥न वयमहमितीमं शब्दं प्रयुज्यमानमन्यस्मिन्नर्थे हेतुत्वेन व्यपदिशामः । **किं तर्हि**॥शब्दाद्व्यतिरिक्तं प्रत्ययं प्रतीमो वयमिममर्थं वयमेवान्येद्युरुपलभामहे वयमेवाद्य स्मराम इति । तस्माद्वयमिममर्थमवगच्छामो वयमेव ह्यो वयमेवाऽद्येति । ये ह्योद्य च, न ते विनष्टाः । अथाप्यस्मिन्नर्थे ब्राह्मणं भवति—" स वा अयमात्मा " [बृ०।२ । ५ । १५ ।] इति प्रकृत्यामनन्ति—" अशीर्यो न हि शीर्यते " [ बृ० । ३ । ९ । २६ । ] इति, तथा " अविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मा " [ बृ० । ४ । ५ । १४ । ] इति । विनश्वरं च विज्ञानम् । तस्माद्विनश्वरादन्यः स इत्यवगच्छामः । **न च** शक्यमेवमवगन्तुं—यथोपलभ्यन्तेऽर्था न तथा भवन्तीति । यथा तु खलु नोपलभ्यन्ते, तथा भवन्तीति । तथा हि सति शशो नास्ति, शशस्य विषाणमस्तीत्यवगम्येत । **न चाहं**प्रत्ययो व्यामोह इति शक्यते वक्तुम् । बाधकप्रत्ययाभावात् ।तस्मात्सुखादिभ्यो व्यतिरिक्तोऽस्ति । एवं चेत्स एव यज्ञायुधीति व्यपदिश्यते ॥ **आह**—यदि विज्ञानादन्यदस्ति विज्ञातृ, विज्ञानमपास्य तन्निर्दिश्यतामिदं तदीदृशं चेति । **न च** तन्नि-

दर्श्यते। तस्मान्न ततोऽन्यदस्तीति। **अत्रोच्यते**। स्वसंवेद्यः स भवति, नासावन्येन शक्यते द्रष्टुं—कथमसौ निदर्श्येतेति । **यथा** च कश्चिच्चक्षुष्मान्स्वयं रूपं पश्यति। न च शक्नोत्यन्यस्मै जात्यन्धाय तन्निदर्शयितुम्। न च तन्न शक्यते निदर्शयितुमित्येतावता नास्तीत्यवगम्यते। **एवमसौ** पुरुषः स्वयमात्मानमुपलभते। न चान्यस्मै शक्नोति दर्शयितुमन्यस्य द्रष्टुस्तं पुरुषं प्रति दर्शनशक्त्यभावात्। सोऽप्यन्यः पुरुषः स्वयमात्मानमुपलभते, न च परमात्मानम्। तेन सर्वे स्वेनस्वेनात्मनाऽऽत्मानमुपलभमानाः सन्त्येव, यद्यपि परपुरुषं नोपलभन्त इति। अथास्मिन्नर्थे ब्राह्मणं भवति—"शांतायां वाचि किं ज्योतिरेवायं पुरुष आत्मज्योतिः" [ बृ० । ४ । ३ । ६ ।--"सम्राडिति होवाच" इति परेण नोपलभ्यते। इत्यत्रापि ब्राह्मणं भवति—" अगृह्यो न हि गृह्यते" [ बृ० । ३ । ९ । २६ । ] इति परेण न गृह्यत इत्येतदभिप्रायमेतत्। **कुतः**। स्वयंज्योतिष्ट्ववचनात्। अथापि ब्राह्मणं भवति"अत्रायं पुरुषः। स्वयञ्ज्योतिर्भवति[बृ० ४। ३। ९। ]इति। केन पुनरुपायेनायमन्यस्मै कथ्यते इति तत्राप्युपाये " स एष नेति नेत्यात्मा" ( बृ०३।९।२६। ) "इति होवाच" इति। असावेवंरूप इति न शक्यते निदर्शयितुम्। यच्च परः पश्यति तत्प्रतिषेधस्तस्योपदेशोपायः--शरीरं परः पश्यति। तेनात्मोपदिश्यते। शरीरं नात्मा, अस्ति शरीरादन्य इति, स चात्मेति शरीरप्रतिषेधेनोपदिश्यते। तथा प्राणादयो नात्मानः। तत्प्रतिषेधेन तेभ्योऽन्य उपदिश्यते। **तथा** परस्थाः सुखादयः परेण लिङ्गैरुपलभ्यन्ते। तेऽपि नात्मान इति तत्प्रतिषेधनान्य उपदिश्यते। यः स्वयं पश्यति, न ततोऽन्यः पुरुष इत्येतदपि पुरुषप्रवृत्त्याऽनुमीयते। यदाऽसौ पुरुषः पूर्वेद्युः सामिकृतानामर्थानां प्रतिसमाधाने शेषानुष्ठाने च यततेऽतः प्रवृत्त्याऽवगम्यते-नूनमसावनित्यान्नित्यमवगच्छतीति । उपमानाच्चोपदिश्यते—यादृशं भवान्स्वयमात्मानं पश्यत्यनेनोपमानेनावगच्छाहमपि तादृशमेव पश्यामीति। यथा कश्चिदात्मीयां वेदानां परस्मा आचक्षीत—दह्यमानस्येव मे भवति, यात्यमानस्येव मे भवति, रुध्यमानस्येव मे भवतीति। अतः

स्वयमवगम्यमानत्वादस्ति तद्व्यतिरिक्तः पुरुष इति। **यद्रुच्यते** विज्ञानमपास्य **तन्निदर्श्यता**मिति । यद्युपायमेव निषेधसि न शक्यमुपायमन्तरेणोपेयमुपेतुम्। अयमेवाभ्युपायो ज्ञातव्यानामर्थानां—यो यथा ज्ञायते स तथेति। तद्यथा—कः शुक्लो नाम—यत्र शुक्लत्वमस्ति। किं शुक्लत्वं नाम—यत्र शुक्लशब्दप्रवृत्तिः । क्व तस्य प्रवृत्तिः । **यच्छुक्लश**ब्द उच्चारिते प्रतीयते। **तस्मान्न** विज्ञानं प्रत्याख्याय कस्यचिद्रूपं निदर्शयितुं शक्यम् । **न च** नियोगतः प्रत्यये प्रतीते प्रत्ययार्थः प्रतीतो भवति । अप्रतीतेऽपि हि प्रत्यये सत्यर्थः प्रतीयत एव । न हि विज्ञानं प्रत्यक्षं विज्ञेयोऽर्थः प्रत्यक्ष इति । एतत्पूर्वमेवोक्तं—तदवश्यकर्तव्येऽपह्नवे कामं विज्ञानमपह्नूयेत, नार्थ इत्येतदुक्तमेव। तस्मादस्ति सुखादिभ्योऽन्यो नित्यः पुरुष इति ॥—॥ **अथ यदुक्तं** " विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञाऽस्ति" [ बृ०।२। ४ । १२ । ] इति ॥ **अत्रोच्यते ॥** अत्रैव "मा भगवान्मोहान्तमपीपिपद् " [ बृ० । ४ । ५ । १४ । ] इति परिचोदनोत्तरकालेऽपह्नुत्य मोहाभिप्रायमस्य वर्णितवान्—"न वा अरेहं मोहं ब्रवीम्यविनाशी वा अरेऽयमात्मानुच्छित्तिधर्मा" [ बृ०।४।५।१४।] "मात्रासंसर्गस्त्वस्य भवति " इति। तस्मान्न विज्ञानमात्रम् । तस्माद्वैषम्यम् ॥—॥ **यदुक्तं** न चैष यातीति विधिशब्द इति ॥ मा भूद्विधिशब्दः । स्वर्गकामो यजेतेति वचनान्तरेणावगतमनुवदिष्यते । तस्मादविरोधः" [ जै० । सू० । १ । १ । ५ । ] इति ॥

## सोपस्करव्याख्यानुवादः—

" तद्वचनादाम्नायस्य प्रामाण्यम् " इति वैशेषिकसूत्रे ( **सोपस्करव्याख्यायामपि** ) एवमुपपादितं "तदित्यनुपक्रान्तमपि प्रसिद्धिसिद्धतयेश्वरं परामृशति । **यथा**—"तदप्रामाण्यमनृतव्याघातपुनरुक्तदोषेभ्यः" इति गौतमीयसूत्रे तच्छब्देनानुपक्रान्तोऽपि वेदः परामृश्यते । तथा च (तद्वचनात्) तेनेश्वरेण प्रणयनाद् (आम्नायस्य ) वेदस्य प्रामाण्यम् ॥ **यद्वा** तदिति सन्निहितं धर्ममेव परामृशति । तथा च धर्मस्य वचना-

त्प्रतिपादनाद् (आम्नायस्य) वेदस्य प्रामाण्यम्। यद्धि वाक्यं प्रामाणिकमर्थं प्रतिपादयति तत्प्रमाणमेव न इत्यर्थः। ईश्वरस्तदाप्तत्वं च साधयिष्यते॥

यच्चोक्तम्--"अनृतव्याघातपुनरुक्तदोषेभ्यः"—इति, तत्रानृतत्वे जन्मान्तरीयफलकल्पनं कर्मकर्तृसाधनवैगुण्यकल्पनं वा। श्रौतात्साङ्गात्कर्मणः फलावश्यंभावनिश्चयादिति॥—॥"तद्वचनादाम्नायस्य प्रामाण्यमिति" इति (**वैशेषिकसूत्रोपस्करव्याख्यायां**)--**ननु** तेनेश्वरेण वेदः प्रणीत इत्यत्रैव विप्रतिपत्तिरत आह-इति—शास्त्रपरिसमाप्तौ।(तद्वचनात्)तेनेश्वरेणवचनात्प्रणयनाद्।(आम्नायस्य)वेदस्य प्रामाण्यम्।**तथा हि**-वेदस्तावत् पौरुषेयः वाक्यत्वादिति साधितम्।**न चास्मदादयस्तेषां** सहस्रशाखावच्छिन्नानां वक्तारः संभाव्यन्ते । अतीन्द्रियार्थत्वात् । **न चा**तीन्द्रियार्थ दर्शिनोऽस्मदादयः॥—॥**किं चा**प्तोक्ताः, वेदाः, महाजनपरिगृहीतत्वाद्, **यन्नाप्तो**क्तं, न **तन्म**हाजनपरिगृहीतम् । महाजनपरिगृहीतं चेदम् । तस्मादाप्तोक्तम् । स्वतन्त्रपुरुषप्रणीतत्वात्। तच्चाप्तोक्तत्वं, महाजनपरिगृहीतत्वं च—सर्वदर्शनान्तःपातिपुरुषानुष्ठीयमानार्थत्वम् । क्वचित्फलाभावः,कर्मकर्तृसाधनवैगुण्यादित्युक्तम् । **कर्तृस्मरणाभावान्नैवमिति चेन्न।** कर्तृस्मरणस्य पूर्वमेव साधित्वात् । तत्प्रणीतत्वं च स्वतन्त्रपुरुषप्रणीतत्वादेव सिद्धम् । न त्वस्मदादीनां सहस्रशाखवेदप्रणयने स्वातन्त्र्यं संभवतीत्युक्तत्वात ॥—॥ **किं च** प्रमाया गुणजन्यत्वेन वैदिकप्रमाया-अपि गुणजन्यत्वमावश्यकम् । तत्र च गुणो वक्तृयथार्थवाक्यार्थज्ञानमेव वाच्यः । तथा च तादृश एव वेदे वक्ता । यः स्वर्गापूर्वादिविषयकसाक्षात्कारवान् । तादृशश्च नेश्वरादन्य इति सुष्ठु " इति ।

## वात्स्यायनभाष्यानुवादः—

तथा च " मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्याद्" इति गौतमीये सूत्रे **वात्स्यायनभाष्यम्**— "**एव**माप्तोपदेशः प्रमाणम् । एवमाप्ताः प्रमाणम् । दृष्टार्थेनाप्तोपदेशेनायुर्वेदेनादृष्टार्थो वेदभागोनुमातव्यः प्रमाणमित्याप्तप्रामाण्यस्य हेतोः समानत्वादिति । अस्यापि चैक-

देशो ग्रामकामो यजेतेत्येवमादिर्दृष्टार्थः । तेनानुमातव्यमिति । लोके च भूयानुपदेशाश्रयोऽव्यवहारः । लौकिकस्याप्युपदेष्टुरुपदेष्टव्यार्थज्ञानपरानुजिघृक्षया, यथाभूतार्थचिख्यापयिषया च,—प्रामाण्यम् । तत्परिग्रहादाप्तोपदेशः प्रमाणमिति । द्रष्टृप्रवक्तृसामान्याच्चानुमानम् । य एवमाप्ता वेदार्थानां द्रष्टारः,प्रवक्तारश्च, त एवायुर्वेदप्रभृतीनामित्यायुर्वेदप्रामाण्यवद्वेदप्रामाण्यमनुमातव्यमिति । नित्यत्वाद्वेदवाक्यानां प्रमाणत्वे तत्प्रामाण्यमाप्तप्रामाण्यादित्ययुक्तम् । शब्दस्य वाचकत्वादर्थप्रतिपत्तौ प्रमाणत्वं, न नित्यत्वात् । नित्यत्वे हि सर्वस्य सर्वेण वचनाच्छब्दार्थव्यवस्थानुपपत्तिः" इति ।

## न्यायवार्तिकाद्यनुवादः—

तथा च(**न्यायवार्तिके**)"अथ शब्दः-आप्तोपदेशः शब्दः" इति "आप्तोपदेशः(**शब्दः**)।न शब्दमात्रमिति सूत्रार्थः।(आप्तः)खलु साक्षात्कृतधर्मा। साक्षात्करणमर्थस्याप्तिः—तया सह वर्तत इत्याप्तः । स्वर्गापूर्वदेवतादिषूपदेशो न प्राप्नोत्याप्तोदितत्वात् ॥ **यदि** साक्षात्करणमर्थस्याप्तिः स्वर्गापूर्वदेवतादौ न कश्चित्पश्यतीति तत्प्रतिपादको व्यवहारो न स्यात् । तस्मादाप्तश्चासावुपदेशश्चेति युक्तं, नाप्तस्योपदेश इति ॥ **नैष दोषः** ॥ न ब्रूमोऽस्मदादीनां प्रत्यक्षाः स्वर्गादय इति । अपि तु यस्य प्रत्यक्षास्तस्योपदेश इति । **कः पुनरत्र न्यायः** ॥ स्वर्गादयः कस्यचित्प्रत्यक्षा इति ब्रूमः । सामान्यविशेषवत्त्वादाश्रितत्वात्कस्यचित्प्रत्यक्षा इति । **यदा**श्रितं, तत्कस्यचित्प्रत्यक्षमिति । परार्थत्वात्—**यत्**परार्थं, **तद**पि कस्यचित्प्रत्यक्षमिति । वस्तुत्वादागमविषयत्वात्—**यद्व**स्तु, **यच्च** कथ्यते, तत्कस्यचित्प्रत्यक्षं भवति । यथा--घटाद्यनित्यत्वात्कस्यचित्प्रत्यक्षम्--इति । **असिद्ध**मपूर्वस्यानित्यत्वम् ॥ **न** ॥ प्रायणानुपपत्तेः । **यदि** धर्माधर्मौ नित्यौ भवतः, कस्य प्रक्षयात्प्रायणमिति । **यदि** पुनरनित्यौ, विपच्यमानयोरुपभोगात्प्रक्षये सति विपच्यमानकर्माशयान्तराभावात्पूर्वशरीरात्प्रच्यवनं मनस उत्तरशरीरे संप्राप्तिश्चेति जन्ममरणे स्तः । तस्मान्न नित्यौ" इति ॥

1036. 1036.

## साङ्ख्यप्रवचनभाष्यानुवादः-

**कापिले पञ्चमाध्यायेपि ( साङ्ख्यप्रवचनभाष्यम् )-**
"वाच्यवाचकभावः सम्बन्धः शब्दार्थयोः" [ कपि० सू० । ५ । ३७ ] । अर्थे वाच्यताख्या शक्तिः, शब्दे वाचकताख्या शक्तिरस्ति । सैव तयोः सम्बन्धोऽनुयोगिभावव । तज्ज्ञानाच्छब्देनार्थोपस्थितिरित्यर्थः ॥ **शक्ति-** ग्राहकाण्याह-"त्रिभिः सम्बन्धसिद्धिः" [ कपि० सू०।५।३८।]।आप्तो-पदेशः, वृद्धव्यवहारः, प्रसिद्धपदसामानाधिकरण्यमित्येतैस्त्रिभिरुक्त-सम्बन्धो गृह्यत इत्यर्थः । "न कार्ये नियम उभयथा दर्शनात् " [ कपि० सू० । ५ । ३९॥ ] । स च शक्तिग्रहः कार्ये एव भवतीति नियमो नास्ति । लोके कार्यवदकार्येऽपि वृद्धव्यवहारादिदर्शनादि-त्यर्थः । **यथा हि**-गामानयेत्यादिकार्यपरवाक्याद्वृद्धस्य गवानय-नादिव्यवहारो दृश्यते, **एवमेव** पुत्रस्ते जात इत्यादिसिद्धपरवाक्या-दपि पुलकादिव्यवहारो दृश्यत इति सिद्धार्थशब्दप्रामाण्यसिद्धौ च विवेके वेदेतत्प्रामाण्यं सिद्धमित्याशयः ॥--॥ **ननु** भवतु लोके सिद्धे शक्तिग्रहोऽधिमत्यययादिदर्शनात् । वेदे तु कथं भविष्यत्यकार्यबोधनवै-यर्थ्यादिति । तत्राह "लोके व्युत्पन्नस्य वेदार्थप्रतीतिः" [ कपि०सू० । ५ । ४० । ] लोके शब्दशक्तिव्युत्पन्नस्य पुरुषस्य तदनुसारेणैव वेदा-र्थप्रतीतिः । न हि लोके शक्तिर्भिन्ना वेदे च भिन्ना । य एव लौकि-कास्त एव वैदिका इति न्यायात् । अतो लोके सिद्धार्थपरत्वसिद्धौ वेदेऽपि तत्सिध्यतीत्यर्थः ॥--॥ अत्र शङ्कते--"न त्रिभिरपौरुषेयत्वा-द्वेदस्य तदर्थस्यातीन्द्रियत्वात् " [ कपि० सू० । ५ । ४१ । ] । **ननु** त्रिभिराप्तोपदेशादिभिर्वेदशब्दे न शक्तिग्रहः संभवति । वेदस्यापौरुषे-यत्वेन तदर्थेष्वाप्तोपदेशासंभवात् । **तथा** पदार्थस्यातीन्द्रियतया तत्र वृद्धव्यवहारस्य प्रसिद्धपदसामानाधिकरण्यस्य च ग्रहीतुमशक्यत्वा-दित्यर्थः ॥--॥ **यच्चोक्तमपौरुषेयत्वेनाप्तोपदेशाभाव इति, तदपि निराकरोति**-"निजशक्तिव्युत्पत्त्या व्यवच्छिद्यते" [ कपि०सू०।५

४३ । ] अपौरुषेयत्वेऽपि वेदानां स्वाभाविकी यार्थेषु शक्तिरस्ति, सैवास्तैर्वृद्धपरम्पराभिर्व्युत्पत्त्यास्य शब्दस्यायमर्थ इत्येवं रूपया व्यवच्छिद्यते । शिष्येभ्योऽर्थांतराद्व्यावर्त्योपदिश्यते । न त्वाधुनिकशब्दवत्स्वयं सङ्केत्यते । येन पौरुषेयत्वापेक्षा स्यादित्यर्थः॥--॥शब्दप्रामाण्यप्रसङ्गेनैव शब्दगतं विशेषमवधारयति--" न नित्यत्वं वेदानां कार्यत्वश्रुतेः" [ कपि० सू०।५।४४ । ]। " स तपोऽतप्यत तस्मात्तपस्तेपानात्त्रयो वेदा अजायन्त " इत्यादिश्रुतेर्वेदानां न नित्यत्वमित्यर्थः । वेदनित्यतावाक्यानि च सजातीयानुपूर्वीप्रवाहानुच्छेदपराणि ॥--॥ तर्हि किं पौरुषेया वेदा नेत्याह--"न पौरुषेयत्वं तत्कर्त्तुः पुरुषस्याभावात्" [ कपि०सू० । ५।४६ । ]। ईश्वरप्रतिषेधादिति शेषः ॥--॥ अपरः कर्त्ता भवत्वियाकाङ्क्षायामाह " मुक्तामुक्तयोरयोग्यत्वात् " [ कपि० सू० । ५ । ४७ । ] जीवन्मुक्तधुरीणो विष्णुर्विशुद्धसत्त्वतया निरतिशयसर्वज्ञोऽपि वीतरागत्वात्सहस्रशाखवेदनिर्माणायोग्यः । अमुक्तस्त्वसर्वज्ञत्वादेवायोग्य इत्यर्थः ॥--॥ **नन्वेवम**पौरुषेयत्वान्नित्यत्वमेवागतं तत्राह--"नापौरुषेयत्वान्नित्यत्वमङ्कुरादिवत्"।५। [कपि०सू० । ४८ । ]। **नन्व**ङ्कुरादिष्वपि कार्यत्वेन घटादिवत्पौरुषेयत्वमनुमेयं तत्राह--" तेषामपि तद्योगे दृष्टबाधादिप्रसक्तिः"[कपि०स०।५।४९।]। यत्पौरुषेयं तच्छरीरजन्यमिति व्याप्तिर्लोके दृष्टा । तस्याबाधादिरेवं सति स्यादित्यर्थः ॥--॥**नन्वा**दिपुरुषोच्चारितत्वाद्वेदा अपि पौरुषेया एवेत्याह--"यस्मिन्नदृष्टेऽपि कृतबुद्धिरुपजायते तत्पौरुषेयम् " [ कपि० सू०।५।५०।]। दृष्ट इवादृष्टेपि यस्मिन्वस्तुनि कृतबुद्धिर्बुद्धिपूर्वकत्वबुद्धिर्जायते तदेव पौरुषेयमिति व्यवह्रियत इत्यर्थः॥**एतदुक्तं भवति॥** न पुरुषोच्चरिततामात्रेण पौरुषेयत्वम् । श्वासप्रश्वासयोः सुषुप्तिकालिकयोः पौरुषेयत्वव्यवहाराभावात् । किं तु बुद्धिपूर्वकत्वेन । वेदास्तु निःश्वासवदेवादृष्टवशादबुद्धिपूर्वका एव स्वयंभुवः सकाशात्स्वयं भवन्ति । अतो न ते पौरुषेयाः । तथा च(**श्रुतिः**) । "तस्यैतस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदः--"[ बृ० । २ । ४ । १० । ] इत्यादिरिति ॥

" **नन्वेवं** यथार्थवाक्यार्थज्ञानपूर्वकत्वाच्छुकवाक्यस्यैव वेदानामपि प्रामाण्यं न स्यात्तत्राह–" निजशक्त्यभिव्यक्तेः स्वतः प्रामाण्यम् " [क० सू०।५। ५१]। वेदानां निजा स्वाभाविकी या यथार्थज्ञानजननशक्तिस्तस्या मन्त्रायुर्वेदादावभिव्यक्तेरुपलम्भादखिलवेदानामेव स्वत एव प्रामाण्यं सिध्यति। न वक्तृयथार्थज्ञानमूलकत्वादिनेत्यर्थः। तथा च (**न्यायसूत्रं**)-'मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यम्'[२।१।६७] इति।

## ऋग्वेदभाष्यानुवादः–

( **ऋग्वेदभाष्योपक्रमे** ) विद्यारण्याचार्या अपि–"**ननु** वेद एव तावन्नास्ति। कुतस्तदवान्तरविशेष ऋग्वेदः। **तथा हि–कोऽयं वेदो नाम। न हि** तत्र लक्षणं प्रमाणं चास्ति। **न च** तदुभयव्यतिरेकेण किंचिद्वस्तु प्रसिध्यति। लक्षणप्रमाणाभ्यां हि वस्तुसिद्धिरिति न्यायविदां मतम् ॥–॥ **प्रत्यक्षा**नुमानोपमानागमेषु प्रमाणविशेषेष्वन्तिमो–(**वेदः**) इति तल्लक्षणमिति **चेन्न** ॥ मन्वादिस्मृतिष्वतिव्याप्तेः। समयबलेन सम्यक्परोक्षानुभवसाधनमित्येतस्य-**आगमलक्षणस्य** तास्वपि सद्भावात् ॥–॥ **अपौ**रुषेयत्वे सतीति विशेषणाददोष इति **चेन्न** ॥ वेदस्यापि परमेश्वरनिर्मितत्वेन पौरुषेयत्वात् ॥–॥ **शरीर**धारिजीवपुरुषनिर्मितत्वाभावादपौरुषेयत्वमिति **चेन्न** ॥ सहस्रशीर्षा पुरुष इत्यादिश्रुतिभिरीश्वरस्यापि शरीरित्वात् ॥ **कर्म**फलरूपशरीरधारिजीवनिर्मितत्वाभावमात्रेणापौरुषेयत्वं विवक्षितमिति **चेन्न** ॥ जीवविशेषैरग्निवाय्वादित्यैर्वेदानामुत्पादितत्वात्। "ऋग्वेद एवाग्नेरजायत यजुर्वेदो वायोः सामवेद आदित्याद्" इति श्रुतेः। ईश्वरस्याग्न्यादिप्रेरकत्वेन निर्मातृत्वं द्रष्टव्यम् ॥

"**मन्त्र**ब्राह्मणात्मकः शब्दराशिः–(**वेदः**) इति **चेन्न** ॥ ईदृशो मन्त्र ईदृशं ब्राह्मणमित्यनयोरद्याप्यनिर्णीतत्वात्। तस्मान्नास्ति किंचिद्वेदस्य लक्षणं, **नापि** तत्सद्भावे प्रमाणं, पश्यामः॥–॥ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वणं चतुर्थमित्यादि वाक्यं प्रमाणमिति।

**चेन्न** ॥ तस्यापि वाक्यस्य वेदान्तःपातित्वेनात्माश्रयत्प्रसङ्गात् । न खलु निपुणोऽपि स्वस्कन्धमारोढुं प्रभवेदिति ॥–॥ " **वेद** एव द्विजातीनां निःश्रेयसकरः परः " इत्यादिस्मृतिवाक्यं प्रमाणमिति **चेन्न** ॥ तस्याप्युक्तश्रुतिमूलत्वेन निराकृतत्वात् । प्रत्यक्षादिकं शङ्कितुमप्ययोग्यम् । वेदविषया तु लोकप्रसिद्धिः सार्वजनीनापि नीलं नभ इत्यादिवद्भ्रान्ता । तस्माल्लक्षणप्रमाणरहितस्य वेदस्य सद्भावो नाङ्गीकर्तुं शक्यत इति **पूर्वपक्षः** ॥

"**अत्रोच्यते**॥मन्त्रब्राह्मणात्मकत्वं तावददुष्टं **लक्षणम्** । अत एवा**पस्तम्बो** यज्ञपरिभाषायामेवमाह 'मन्त्रब्राह्मणयोर्वेदनामधेयम्' (१ध्या.) इति ॥ तयोस्तु स्वरूपमुपरिष्टा**न्निर्णेष्यते**॥अपौरुषेयवाक्यत्वमिदमपि यादृशमस्माकं विवक्षितं तादृशमुत्तरत्र **स्पष्टीभविष्यति** । प्रमाणान्यपि यथोक्तश्रुतिस्मृतिलोकप्रसिद्धिरूपाणि वेदसद्भावे द्रष्टव्यानि । **यथा** घटपटादिद्रव्याणां स्वप्रकाशकत्वाभावेऽपि सूर्यचन्द्रादीनां स्वप्रकाशकत्वमविरुद्धं, **तथा** मनुष्यादीनां स्वस्कन्धारोहासंभवेऽप्यकुण्ठितशक्तेर्वेदस्येतरवस्तुप्रतिपादकत्ववत्स्वप्रतिपादकत्वमप्यस्तु । अत एव सम्प्रदायविदोऽकुण्ठितां शक्तिं वेदस्य दर्शयन्ति—चोदना हि भूतं भवन्तं भविष्यन्तं सूक्ष्मं व्यवहितं विप्रकृष्टमित्येवंजातीयकमर्थं शक्नोत्यवगमयितुमिति । तथासति वेदमूलायाः स्मृतेस्तदुभयमूलाया लोकप्रसिद्धेश्च प्रामाण्यं दुर्वारम् । तस्माल्लक्षणप्रमाणसिद्धो वेदो न केनापि चार्वाकादिनाऽपोढुं शक्य इति स्थितम् ।

"**नन्वस्तु** नाम वेदाख्यः कश्चित्पदार्थः । **तथापि** नासौ व्याख्यानमर्हति । अप्रमाणत्वेनानुपयुक्तत्वात् । न हि वेदः प्रमाणम् । तल्लक्षणस्य तत्र दुःसंपादत्वात् । **तथा हि**—सम्यगनुभवसाधनं—**प्रमाणम्**—इति **केचिल्लक्षणमाहुः** ॥–॥ **अपरे**त्वनधिगतार्थगन्तृ—प्रमाणम्—इत्याचक्षते । न चैतदुभयं वेदे—संभवति । मन्त्रब्राह्मणात्मको हि (वेदः) । तत्र मन्त्राः केचिदबोधकाः । "अभ्यर्कसा- [illegible] " (ऋ. सं.) इत्येको मन्त्रः । "यादृश्मिन्धायि

तमपस्ययाविदद् " ( ऋ. सं. ) इत्यन्यः । " सृण्येव जर्भरी तुर्फरीतू " ( ऋ. सं. ) इत्यपरः । एवम् "आपान्तमन्युस्तृपलप्रभर्मा" ( ऋ. सं ) इत्यादय उदाहार्याः । न ह्येतैमन्त्रैः कश्चिदप्यर्थोऽवबुध्यते । एतेष्वनुभव एव यदा नास्ति, तदा तत्सम्यक्त्वं तदीयसाधनत्वं च दूरापेतम् । " अधः स्विदासी३ दुपरिस्विदासी३द् " ( ऋ. सं. ) इति मन्त्रस्य बोधकत्वेऽपि स्थाणुर्वा पुरुषो वेत्यादिवाक्यवत्सन्दिग्धार्थबोधकत्वान्नास्ति प्रामाण्यम् । "ओषधे त्रायस्वैनम्" (तै.सं.) इति मन्त्रो दर्भविषयः। "स्वधिते मैन ँ हि ँ सीः" इति क्षुरविषयः। "शृणोत ग्रावाणः"(तै.सं.) इति पाषाणविषयः॥एतेष्वचेतनानां दर्भक्षुरपाषाणानां चेतनवत्सम्बोधनं श्रूयते । ततो द्वौ चन्द्रमसाविति वाक्यवद्विपरीतार्थबोधकत्वादप्रामाण्यम्।"एक एव रुद्रो न द्वितीयोऽवतस्थे" "सहस्राणि सहस्रशो ये रुद्रा अधि भूम्याम् " (तै.सं. ) इत्येतयोस्तु मन्त्रयोर्यावज्जीवमहं मौनीति वाक्यवद्व्याघातबोधकत्वादप्रामाण्यम् । "आप उन्दन्तु"(तै.सं)इति मन्त्रो यजमानस्य क्षौरकाले जलेन शिरसः क्लेदनं ब्रूते । "शुभिके शिर आरोह शोभयन्ती मुखं मम" (बोधा.सू. ) इति मन्त्रो विवाहकाले मङ्गलाचरणार्थं पुष्पनिर्मितायाः शुभिकाया वरवध्वोः शिरस्यवस्थानं ब्रूते । तयोश्च मन्त्रयोर्लोकप्रसिद्धार्थानुवादित्वादनधिगतार्थगन्तृत्वं नास्ति । तस्मान्मन्त्रभागो न प्रमाणम् ॥

"**अत्रोच्यते**॥अग्न्यगादिमन्त्राणामर्थो यास्केन निरुक्तग्रन्थेऽवबोधितः ॥ तत्परिचयरहितानामबोधो न मन्त्राणां दोषमावहति । अत एवात्र लौकिकन्यायमुदाहरन्ति—नैष स्थाणोरपराधो यदेनमन्धो न पश्यति पुरुषापराधः स भवतीति । अधः स्विदासी३द् " इति मन्त्रश्च न सन्देहबोधनाय प्रवृत्तः । किं तर्हि । जगत्कारणस्य परवस्तुनोऽतिगम्भीरत्वं निश्चेतुमेव प्रवृत्तः । तदर्थमेव हि गुरुशास्त्रसम्प्रदायरहितैर्दुर्बोधत्वमधः स्विदित्यनया वचोभङ्ग्योपन्यस्यते । स एवाभिप्राय उपरितनेषु "को अद्धा वेद"(ऋ.सं.) इत्यादिमन्त्रेषु स्पष्टीकृतः । ओषध्यादिमन्त्रेष्वपि चेतना एव तत्तदभिमानिदेवतास्तेनतेन नाम्ना

सम्बोध्यन्ते। ताश्च देवता भगवता बादरायणेन "अभिमानिव्यपदेशस्तु" (व्या.सू.) इति सूत्रे सूत्रिताः । एकस्यापि रुद्रस्य स्वमहिम्ना सहस्रमूर्तिस्वीकारान्नास्ति परस्परव्याघातः । जलादिद्रव्येण शिरःक्लेदनादेर्लोकप्रसिद्धत्वेऽपि तदभिमानिदेवतानुग्रहस्याप्रसिद्धत्वात्तद्विषयत्वेनाज्ञातार्थज्ञापकत्वम् । ततो लक्षणसद्भावादस्ति मन्त्रभागस्य प्रामाण्यम् ।

"एतदेवाभिप्रेत्य भगवाञ्जैमिनिर्मन्त्राधिकरणे मन्त्राणां विवक्षितार्थत्वमसूत्रयत । तानि च सूत्राणि क्रमेणोदाहृत्य व्याख्यास्यामः । तत्र पूर्वपक्षं सूत्रयति—"तदर्थशास्त्राद्" इति । यस्यार्थस्याभिधाने समर्थो मन्त्रः स एवाभिधेयो यस्य शास्त्रस्य ब्राह्मणवाक्यस्य तदिदं वाक्यं तदर्थशास्त्रं—तस्मात् । शास्त्रादविवक्षितार्थो(मन्त्रः)इत्यवगम्यते । तथा हि—"उरु प्रथस्व" (तै.सं.) इति मन्त्रेण पुरोडाशप्रथनमभिधीयते । "पुरोडाशं प्रथयति" इति ब्राह्मणेनापि तदेवाभिधीयते । तथा सति मन्त्रेणैव प्रतीतत्वात्तदर्थबोधनाय प्रवृत्तं ब्राह्मणवाक्यमनर्थकं स्यात् । मन्त्रस्याविवक्षितार्थत्वे तु विनियोगबोधनाय ब्राह्मणवाक्यमुपयुक्तम् । तस्मान्मन्त्रा उच्चारणेनैवानुष्ठान उपकुर्वन्ति ॥

"ननूच्चारणार्थत्वे सत्यदृष्टं प्रयोजनं परिकल्प्येत । अर्थाभिधायकत्वे तु दृष्टं लभ्येत । तस्माद्ब्राह्मणस्यानुवादकत्वमभ्युपेत्यापि मन्त्रस्याभिधानार्थत्वमेवेत्याशङ्क्योत्तरं सूत्रयति—"वाक्यनियमाद्" इति, "अग्निर्मूर्द्धा दिवः ककुद्" (ऋ.सं.) इत्येवमेव वाक्यं पठितव्यमिति मन्त्रे नियम उपलभ्यते । अर्थप्रत्यायनं तु मूर्द्धाग्निरित्येवं व्युत्क्रमपाठेऽपि भवत्येव । तस्मान्नियतपाठक्रमसाफल्योच्चारणमेव मन्त्रप्रयोजनम्॥--॥ ननु पाठक्रमनियममात्रस्यादृष्टार्थत्वेऽपि मन्त्रपाठोऽर्थबोधनार्थ एवेत्याशङ्क्य तत्र दोषान्तरं सूत्रयति--"बुद्धशास्त्राद्" इति। "अग्नीदग्नीन्विहर" (तै.सं.) इति प्रेषमन्त्रः प्रयोगकाले पठ्यते । तच्चाग्निविहरणादिकर्माग्नीध्रेणाध्ययनकाल एव स्वकर्त्तव्यत्वेन बुद्धम् । तस्य च बुद्धस्यार्थस्य पुनर्मन्त्रोच्चारणेन शासनमनर्थकम् । न हि सोपानत्के पादे पुनरप्युपानहं प्रतिमुञ्चति॥--॥ ननु बुद्धस्यार्थस्य प्रामादिकविस्मरणपरिहाराय मन्त्रेण स्मारणमास्त्वि-

त्याशङ्क्य दोषान्तरं सूत्रयति--"अविद्यमानवचनाद्" इति । "चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य" (ऋ.सं.)इति मन्त्र आम्नायते । न खलु चतुःशृङ्गत्वाद्युपेतं किञ्चिद्यज्ञसाधनं विद्यते यन्मन्त्रपाठेनानुस्मर्यते॥--॥**नन्वी**दृशी काचिद्देवता स्यादित्याशङ्क्यान्यं दोषं सूत्रयति--"अचेतनेऽर्थबन्धनाद्" इति । "ओषधे त्रायस्वैनं" "शृणोत ग्रावाणः" इत्यादावचेतने द्रव्ये चेतनोचितं रक्षणश्रवणाद्यर्थं बध्नाति । स चायुक्तः ॥--॥ **नन्व**भिमानिव्यपदेश इति वैयासिकशास्त्रे सूत्रितत्वादोषध्याद्यभिमानिचेतनदेवतात्र विवक्ष्यतामित्याशङ्क्य दोषान्तरं सूत्रयति--"अर्थविप्रतिषेधाद्" इति । "अदितिर्द्यौरदितिरन्तरिक्षम्"(ऋ.सं.) इति मन्त्र आम्नायते। यदेव द्यौस्तदेवान्तरिक्षमित्ययमर्थो विप्रतिषिद्धः । "एक एव रुद्रः" "सहस्राणि सहस्रशो ये रुद्राः" इत्यादिकमप्युदाहर्तव्यम् ॥–॥ **ननु** "त्वमेव माता च पिता त्वमेव" इत्यादिवदन्तरिक्षादिरूपत्वेनादितिः स्तूयते । **एव**मेकस्यापि रुद्रस्य योगसामर्थ्याद्बहुरूपस्वीकारोऽस्तु । ततो नार्थविप्रतिषेध इत्याशङ्क्य दोषान्तरं सूत्रयति–"स्वाध्यायवद्वचनाद्"इति । पूर्णिका नाम काचिद्योषिदवघातं करोति । तत्समीपे माणवकः स्वाध्यायग्रहणार्थं कदाचिदवघातमन्त्रमधीते । **न च** तस्यार्थप्रकाशनविवक्षाऽस्ति । प्रतिमुसलप्रहारं तस्य मन्त्रस्यापठ्यमानत्वाद्। अक्षरग्रहणायैव तं मन्त्रमन्यांश्च मन्त्रानभ्यस्यति । तत्र स्वाध्यायकाले पठितोऽप्यवघातमन्त्रो **यथा** पूर्णिकां प्रति स्वार्थं न ब्रूते **तथा** कर्मकालेऽपि स्वार्थं न वक्ष्यति ॥–॥**ननु** तत्र माणवकस्यार्थविवक्षा नास्ति । पूर्णिकाप्यवबोद्धुमक्षमा । कर्मणि त्वध्वर्योरर्थविवक्षा विद्यते बोधश्च संभवतीत्याशङ्क्य दोषान्तरं सूत्रयति–"अविज्ञेयाद्" इति । केषांचिन्मन्त्राणामर्थो विज्ञातुं न शक्यते ॥ **तद्यथा**–"अम्यक्सा त इन्द्र ऋष्टिरस्मे" इत्येको मन्त्रः । "सृण्येव जर्भरी तुर्फरीतू" इत्यपरो मन्त्रः ॥--॥ **नन्वी**दृशमन्त्रार्थबोधायैव निगमनिघण्टुनिरुक्तव्याकरणानि प्रवृत्तानीत्याशङ्क्य दोषान्तरं सूत्रयति--"अनित्यसंयोगान्मन्त्रानर्थक्यम्" इति ।

"किं ते कृण्वन्ति कीकटेषु" (ऋ.सं.) इति मन्त्रे कीकटो नाम जनपद आम्नातः । **तथा** नैचाशाखं नाम नगरं, प्रमगन्दो राजेत्येतेऽर्था अनित्या आम्नाताः । तथासति प्राक्प्रमगन्दान्नायं मन्त्रो भूतपूर्व इति गम्यते । तदेवमेतैस्तदर्थशास्त्रादिभिर्हेतुभिर्मन्त्राणामर्थप्रत्यायनार्थत्वं नास्ति । किं तूच्चारणाददृष्टार्था एवेति **पूर्वपक्षः।**

"**तत्र** सिद्धांतं सूत्रयति "अविशिष्टस्तु वाक्यार्थः" इति तुशब्देन मन्त्राणामदृष्टार्थमुच्चारणमात्रं वारयति । क्रियाकारकसंबन्धेन प्रतीयमानो वाक्यार्थो लोकवेदयोरविशिष्टः । तथासति **यथा** लोकेऽर्थप्रत्यायनायैव वाक्यमुच्चार्यते, **तथा** वैदिक यागप्रयोगेऽपि द्रष्टव्यम् । मन्त्रेण प्रकाशितस्त्वर्थोऽनुष्ठातुं शक्यते न त्वप्रकाशितः । तस्मान्मन्त्रोच्चारणस्यार्थप्रकाशनरूपं दृष्टमेव प्रयोजनम् ॥–॥ **ननु** "अभ्रिरसि नारिरसि" इत्यारभ्य "त्रैष्टुभेन त्वा छन्दसा ददे" (तै.सं.) इति मन्त्र आम्नातः । तेनैव मन्त्रेण प्रतीतेऽप्यभ्र्यादाने पुनर्ब्राह्मणेन तां चतुर्भिरभ्रिमादत्त इति विधीयते । तदेतद्विधानं त्वत्पक्षे व्यर्थं स्यादित्याशङ्क्योत्तरं सूत्रयति–"गुणार्थेन पुनः श्रुतिः" इति । मन्त्रेण प्रतीतस्यैवार्थस्य ब्राह्मणे यत्पुनः श्रवणं तदेतच्चतुःसङ्ख्यालक्षणगुणविधानार्थत्वेनोपयुज्यते । एतस्य विधानस्याभावे चतुर्णां मन्त्राणां मध्ये येन केनाप्येकेनाभ्रिराददीयेत ॥–॥ **ननु** "इमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीमादत्ते" (तै.सं.) इत्यत्र मन्त्रसामर्थ्यादेव प्राप्तस्य रशनादानस्य पुनर्ब्राह्मणवाक्यं विनियोजकमाम्नायते । तदेतत्त्वन्मते व्यर्थमित्याशङ्क्योत्तरं सूत्रयति "परिसंङ्ख्या" इति । गर्दभाभिधानीं नादत्त इति निषेधः परिसङ्ख्या । तदर्थमिदं ब्राह्मणवाक्यम् ॥–॥ **ननु** परिसङ्ख्यायां त्रयो दोषाः प्राप्नुयुः। आदत्त इति शब्दो रशनादानलक्षणं स्वार्थं जह्यात्। तन्निषेधलक्षणः परार्थोऽस्य शब्दस्य कल्प्येत। रशनात्वसामान्येन च प्राप्तं गर्दभरशनाया आदानं बाध्येतेति त्रयो दोषाः ॥ **नैवम् ॥** गर्दभरशनाया अप्राप्तत्वात् । **तथा हि**–त्वत्पक्षे प्रकरणपाठान्यथानुपपत्त्या मन्त्रेणानेनादानं कुर्यादिति वाक्यं परिकल्प्यते । तेन च

वाक्येन मन्त्रादानयोः सम्बन्धे सिद्धे सति पश्चात्किंविषयमादानमिति वीक्षायां लिङ्गादशनामात्रस्यादानमुपेत्य गर्दभरशनायाः प्राप्तिर्वक्तव्या सा च विलम्ब्यत इत्यश्वाभिधानीमिति प्रत्यक्षेण वाक्येन मन्त्रादानयोः सम्बन्धे सति लिङ्गादशनामात्रे प्राप्तमादानमश्वाभिधानीमिति श्रुत्या विशेषे व्यवस्थाप्यते। ततो मन्त्रस्य निराकाङ्क्षत्वाद्गर्दभरशनाया अप्राप्तत्वान्नास्ति प्राप्तबाधः । अत एव निषेधार्थो न कल्प्यते । विध्यर्थश्च न त्यज्यते । तत्र कुतो दोषत्रयम् । ईदृशमप्राप्तिरूपयेव गर्दभरशनाया निवारणमभिप्रेत्य " परिसङ्ख्या " इति सूत्रितम् ।

**ननु** " उरु प्रथस्वेति प्रथयति" इति ब्राह्मणस्य वैयर्थ्यं तदवस्थमेवेत्याशङ्क्योत्तरं सूत्रयति–"अर्थवादो वा" [१।२।४३] इति । वाशब्दो वैयर्थ्यं वारयति। अस्त्यत्रार्थवादो "यज्ञपतिमेव [३।२।८] तत्प्रथयति" इति ( तै. सं. ) तेनार्थवादेन सम्बन्धाय ब्राह्मणे विधिः पठ्यते ॥–॥ **ननु** प्रथयतीत्यनेनैव विधिशब्देन प्रथनमनूद्य यज्ञपतिमेवेत्यादिनार्थवादेन स्तोतव्यम् । तदेव तु प्रथनं कुतः प्राप्तमित्याशङ्क्योत्तरं सूत्रयति–"मन्त्राभिधानाद्" [३।२।४४] इति । अध्वर्युः पुरोडाशमुद्दिश्य मन्त्रे प्रथस्वेत्येवमभिधत्ते । तस्मादभिधानादध्वर्युकर्तृकं प्रथनं प्राप्तम् । **यथा**–लोके यः कुर्विति ब्रूते स कारयत्येव, **तथा**त्रापि यः प्रथस्वेति ब्रूते स प्रथयत्येव। **यदुक्तम्**– " अग्निर्मूर्द्धा दिवः " इति पाठक्रमनियमाददृष्टार्थो मन्त्र इति तत्रोत्तरं सूत्रयति–" अविरुद्धं परम्" [१।२।४५] इति । परं द्वितीयसूत्रोक्तमस्मत्पक्षेऽप्यविरुद्धम् । न हि वयं पाठक्रमनियमाददृष्टं निवारयामः । किं तर्हि । मन्त्रोच्चारणेन जायमानमर्थप्रत्यायनं दृष्टप्रयोजनत्वान्नोपेक्षितव्यमित्येतावदेव ब्रूमः ॥–॥ **ननु** " प्रोक्षणीरासादय " इति मन्त्रो बुद्धमवार्थं शास्ति ॥ **तदुक्तम्** ॥ सोपानत्कस्य पादस्योपानदन्तरासम्भवादित्युक्तमिति चेत् । तस्य परिहारं सूत्रयति– " सम्प्रैषे कर्मगर्हानुपलम्भः संस्कारत्वाद्" [१।२।४६] इति । सम्प्रैषकर्मणो गर्हा त्वदुक्तदोषो नोपलभ्यते । बुद्धस्याप्यर्थस्य मन्त्रेणैवानुस्मरणे सति नियमाददृष्टलक्षणस्य संस्कारस्य सद्भावात् ॥–॥ **यच्चोक्तं** " चत्वारि-

शृङ्गा " इति मन्त्रोऽसन्तमेवार्थमभिधत्त इति तस्योत्तरं सूत्रयति— " अभिधा[२] [४]नेऽर्थवादः " इति । असतोऽर्थस्याभिधायके वाक्ये गौणस्यार्थस्योक्तिर्द्रष्टव्या । तद्यथा—चत्वारो होत्रध्वर्यूद्गातृब्रह्माणोऽस्यकर्मणः **शृङ्गाणि** । प्रातःसवनादयस्त्रयः **पादाः** । पत्नीयजमानौ द्वे **शीर्षे** । गायत्र्यादीनि सप्त छन्दांसि **हस्ताः** । ऋग्वेदादिभिस्त्रिभिर्वेदैस्त्रेधा **बन्धनम्** । कामान्वर्षतीति—**वृषभः** । **रोरवीति** स्तोत्रशस्त्रादिशब्दान्पुनःपुनःकरोति । **महो देवः** सोऽयं प्रौढो यज्ञरूपो देवो मर्त्यानाविवेशेति मनुष्या एवात्राधिकारिणः ॥ लोकेऽप्येवं गौणप्रयोगा दृश्यंते—चक्रवाकस्तनी हंसदन्तावली काशवस्त्रा शैवलकेशिनीत्येवं नद्याः स्तूयमानत्वात् ॥ **एवम्** " ओषधे त्रायस्व " " शृणोत ग्रावाणः " इत्याद्यचेतनसम्बोधनानि स्तुतिपरत्वेन योजनीयानि । यस्मिन्वपन ओषधिरपि त्रायते, तत्र वपनकर्त्ता त्रायत इति किमु वक्तव्यम् ॥ **तथा** ग्रावाणोऽपि प्रातरनुवाकं शृण्वन्ति, किमुत विद्वांसो ब्राह्मणा इत्यादि मन्त्राणामभिप्रायः । योपि " अदितिर्द्यौरदितिरन्तरिक्षम् " इति विप्रतिषेध उक्तः, तस्योत्तरं सूत्रयति— " गुणादविप्रतिषेधः स्याद् " इति । **यथा** " त्वमेव पिता त्वमेव माता " इत्यत्र गौणप्रयोगादविरोधः, **तद्वत्** । **एवमेक**रुद्रदैवत्ये कर्मण्येको रुद्रः, शतरुद्रदैवत्ये शतं रुद्राः, इत्यविरोधः ॥

"**यदप्युक्तं** स्वाध्यायमधीयानो माणवकः पूर्णिकाया अवहतिं न प्रकाशयतुमिच्छतीति, तत्रोत्तरं सूत्रयति—" विद्यावचनमसंयोगाद् " इति । वेदविद्याग्रहणकालेऽर्थस्य यदवचनं तदयज्ञसंयोगादुपपद्यते । **न** हि पूर्णिकाया अवघाता यज्ञसंयुक्ताः, **नापि** माणवको यज्ञमनुतिष्ठति । अतो यज्ञानुपकारान्न तत्रार्थविवक्षा ॥—॥ **यदप्युक्तम्** " अम्यक्सा त इन्द्र " " शृण्येव जर्भरी तुर्फरीतू " इत्यादावर्थस्य ज्ञातुमशक्यत्वान्नास्त्येवार्थ इति, तत्रोत्तरं सूत्रयति—" सतः परम[५०] विज्ञानम् " इति । विद्यमान एवार्थः प्रमादालस्यादिभिर्न ज्ञायते । तेषां निगमनिरुक्तव्याकरणवशेन धातुतोऽर्थः परिकल्पयितव्यः । **तद्यथा**—

" जर्भरी तुर्फरीतू " इत्येवमादीन्यश्विनोरभिधानानि । तेषु हि द्विवचनान्तत्वं लक्ष्यते।आर्श्वि नं चेदं सूक्तम्(ऋ.सं.)।"अश्विनोः काममप्रा" इति दर्शनात्एतदेवाभिप्रेत्य निरुक्तकारो व्याचष्टे–"जर्भरी–भर्ताराविस्यर्थः, तुर्फरीतू–हंताराविस्यर्थः" इति । **एवम्** " अम्यक्सा त " इत्यादावप्युन्नेयम्॥–॥ **यदप्युक्तं** प्रमगन्दाद्यनित्यार्थसंयोगान्मन्त्रस्यानादित्वं न स्यादिति, तत्रोत्तरं सूत्रयति " उक्तश्चानित्यसंयोगः " इति । प्रथमपादस्यान्तिमाधिकरणे सोऽयमनित्यसंयोगदोष उक्तः परिहृतः ॥ **तथा हि**–तत्र ( **पूर्वपक्षे** ) वेदानां पौरुषेयत्वं वक्तुं काठकं कालापकमित्यादिपुरुषसम्बन्धाभिधानं हेतूकृत्य"अनित्यदर्शनाच्च"इति हेत्वन्तरं सूत्रितम् ॥ **तस्यायमर्थः** ॥ "बबरः प्रावाहणिरकामयत" इत्यनित्यानां बबरादीनामर्थानां दर्शनात्ततः पूर्वमसत्त्वात्पौरुषेयो वेद इति, तस्योत्तरमेवं सूत्रितम्–" परं तु श्रुतिसामान्यमात्रम् " इति ॥ **तस्यायमर्थः ॥** यत्काठकादिसमाख्यानं, तत्प्रवचननिमित्तम् ॥–॥ **यत्तु** परं बबराद्यनित्यदर्शनं, तच्छब्दसामान्यमात्रम् । न तु तत्रानित्यो बबराख्यः कश्चित्पुरुषो विवक्षितः । किं तु बबर इति शब्दानुकृतिः । तथासति बबर इति शब्दं कुर्वन्वायुरभिधीयते । स प्रावाहणिः । प्रकर्षेण वहनशीलः। एवमन्यत्राप्यूहनीयम् ॥ तदेवं कस्यचिदपि दोषस्यासंभवाद्विवक्षितार्था मन्त्राः स्वार्थप्रकाशनायैव प्रयोक्तव्याः ॥–॥ **नन्वर्थ**प्रकाशनार्थत्वे सति दृष्टप्रयोजनं लभ्यत इति युक्तिमात्रमिदमुच्यते । न त्वेतदुपोद्बलकं किञ्चिच्छ्रौतं लिङ्गं पश्याम इत्याशङ्क्योत्तरं सूत्रयति–"लिङ्गोपदेशश्च तदर्थवद् " इति । "आग्नेय्याग्नीध्रमुपतिष्ठत" इति श्रूयते ॥ **तस्यायमर्थः ॥** अग्निर्देवता यस्या ऋचः सेयमाग्नेयी, तयाग्नीध्रस्थानमुपतिष्ठेतेति । अत्र ह्युपस्थानमुपदिशद्ब्राह्मणम्–" अग्ने नय " इत्यनयोपतिष्ठेतेति मन्त्रप्रतीकं पठित्वा नोपदिशति । किं त्वाग्नेयीत्वालिङ्गेनोपादिशति । **यदा** तस्यामृच्यग्निः प्राधान्येन प्रतिपाद्यते, **तदा** तस्या ऋचोऽग्निर्देवता भवति । तथासत्याग्नेय्येति देवतावाचितद्धितान्तनिर्देश उपपद्यते । तस्मादयमुपदेशस्तन्मन्त्रवा-

क्यमर्थवदिति बोधयति । अतो विवक्षितार्थत्वादर्थप्रत्यायनार्थं प्रयोगकाले मन्त्रोच्चारणम् ॥ **तस्मिन्नेव** विवक्षितार्थत्वे लिङ्गान्तरं सूत्रयति— "ऊहः" इति । प्रकृतावाम्नातस्य मन्त्रस्य विकृतौ समवेतार्थत्वाय तदुचितपदान्तरस्य प्रक्षेपेण पाठः—**ऊहः**। तद्यथा—"अन्वेनं माता मन्यतामनु पितानुभ्राता" (तै.सं.) इति प्राकृतपशुविषयो मन्त्रपाठः।तस्य च मन्त्रस्य विकृतौ पशुद्वये सत्यन्वेनौ मातामन्यतामित्यूहः।पशुबहुत्वे सत्यन्वेनान्माता मन्यतामित्यूहः कर्तव्यः।एतन्मन्त्रव्याख्यानरूपं ब्राह्मणमेवमाम्नायते"न माता वर्धते न पिता"इति॥**तत्रेदं चिन्तनीयम्॥किं मत्रशरीरवृद्धिर्निषिध्यत-आहोस्वित्**-शब्दवृद्धिरिति।एकवचनान्तस्य मातृशब्दस्य मातराविति द्विवचनान्तत्वेन वा मातर इति बहुवचनान्तत्वे न वा प्रयोगः शब्दवृद्धिः।तत्र न तावच्छरीरवृद्धिर्निषेद्धुं शक्यते।बाल्यकौमारयौवनादिवयोनुसारेण तद्वृद्धेः प्रत्यक्षत्वात्।अतः शब्दवृद्धिनिषेध एव परिशिष्यते । मातृशब्दपितृशब्दयोर्विशेषाकारेण वृद्धिनिषेधादितरस्यैनमितिशब्दस्यार्थानुसारिणी वृद्धिः सूचिता भवति।तत्र **यद्यर्थो** न विवक्ष्येत,**तदा** पशुद्वित्वे द्विवचनं, पशुबहुत्वे बहुवचनं च, कथमूह्येत।तस्माद्विवक्षितार्था मन्त्राः।तस्मिन्नेवार्थे लिङ्गान्तरं सूत्रयति—"विधिशब्दाच्च" इति । मन्त्रव्याख्यानरूपो ब्राह्मणगतः शब्दो विधिशब्द इत्युच्यते । स चैवमाम्नायते—"शतं हिमाः शतं वर्षाणि जीव्याः स्मेत्येवैतदाह"इति। तत्र "शतं हिमाः" इत्येतद्व्याख्येयमन्त्रस्य प्रतीकम् । अवशिष्टं तु तस्य तात्पर्यव्याख्यानम् । मन्त्रस्याविवक्षितार्थत्वे तु किं नाम तात्पर्यं मन्त्रे व्याख्यायते ॥ तस्माद्विवक्षितार्था मन्त्राः प्रयोगकाले स्वार्थप्रकाशनायैवोच्चारयितव्याः ॥

"तत्र संग्रहश्लोकौ—

"मन्त्रा उरु प्रथस्वेति किमदृष्टैकहेतवः ।
यागेषूत पुरोडाशप्रथनादेश्च भासकाः ॥ १ ॥
ब्राह्मणेनापि तद्धानान्मन्त्राः पुण्यैकहेतवः ।
न तद्धानस्य दृष्टत्वाद्दृष्टं वरमदृष्टतः ॥ २ ॥ इति ॥

"**नन्वस्तु** मन्त्रभागस्य प्रामाण्यम्।ब्राह्मणभागस्य तु न तद्युज्यते । **तथा हि-द्विविधं** ब्राह्मणं विधिरर्थवादश्चेति।।तथाचा**पस्तम्बः**-"कर्म चोदना **ब्राह्मणानि**।ब्राह्मणशेषोऽ**र्थवादः**" ( धर्म.सू. ) इति । विधिरपि **द्विविधः**–अप्रवृत्तप्रवर्तनमज्ञातज्ञापनं चेति।"आग्नावैष्णवं पुरोडाशं निर्वपन्तिदीक्षणीयायाम्"(ऐ.ब्रा.)इत्याद्याः कर्मकाण्डगता विधयः–अप्रवृत्तप्रवर्तकाः।"आत्मा वा इदमेक एवाग्र आसीद्"(ऐ.उप.)इत्यादयो ब्रह्मकाण्डगता विधयः–अज्ञातज्ञापकाः। तत्र कर्मकाण्डगतानां " जर्तिलैर्यवाग्वा वा जुहुयाद्गवीधुकयवाग्वा वा"(तै.सं)इत्यादिविधीनां नास्ति प्रामाण्यम् । प्रवृत्त्ययोग्यद्रव्यविधानेन सम्यगनुभवसाधनत्वाभावाद् ।अयोग्यत्वंच वाक्यशेषे समाम्नातम्-"अनाहुतिर्वै जर्तिलाश्च गवीधुकाश्च"( तै.सं.) इति । तत्र ह्यारण्यतिलानामारण्यगोधूमानां चाहुतिद्रव्यत्वं निषिद्धम् । तस्माद्बाधितो जर्तिलादिविधिरप्रमाणम् । एवमैतरेयतैत्तिरीयादिब्राह्मणेषु "तत्तनादृत्यम्" (ऐ०) "तत्तथा न कार्यम्" (तै०) इति वाक्याभ्यां बहवो विधयो निषिद्धाः ॥–॥**अपि** चैतरेयब्राह्मणेऽनुदितहोमं बहुधा निन्दित्वा तस्माद्"उदिते होतव्यम्"इत्यसकृन्निगमितम्।तैत्तिरीयाश्च तथैवामनन्ति " यदनुदिते सूर्ये प्रातर्जुहुयात । उभयमेवाग्नेयꣳ स्यात् । उदिते सूर्ये प्रातर्जुहोति"(ब्रा.)इति।पुनरपि त एवोदितहोमे दोषमामनन्ति–"यदुदिते सूर्ये प्रातर्जुहुयात । यथाऽतिथये प्रद्रुताय शून्यायावसथायाहार्यꣳ हरन्ति। तादृगेव तद् " (ब्रा.) इति।।–।।**तथैव**"अतिरात्रे षोडशिनं गृह्णाति " इति विधिः " नातिरात्रे षोडशिनं गृह्णाति " इति निषेधेन बाध्यते । ज्योतिष्टोमादिष्वप्यनुष्ठानानन्तरमेव स्वर्गादिफलं नोपलभ्यते । न हि भोजनानन्तरं तृप्तेरनुपलम्भोऽस्ति ॥ तस्मात्कर्मविधिषु प्रामाण्यं दुःसम्पादनीयम् । अज्ञातज्ञापकेषु ब्रह्मविधिष्वपि परस्परविरोधान्नास्ति प्रामाण्यम्।"आत्मा वा इदमेक एवाग्र आसीद्"(आर.)इत्यैतरेयिण आमनन्ति ॥ " असद्वा इदमग्र आसीद् " इति तैत्तिरीयाः । सोऽयं विरोधः । तस्माद्वेदे विधिभागः सर्वोऽप्यप्रमाणम्-- **इति प्राप्ते ब्रूमः ॥** अस्त्वेवं जर्तिलादिविधेरप्रामाण्यम् । तदर्थस्याननुष्ठेयत्वाद्।

अनुष्ठेयस्त्वर्थ उपरितने "अजाक्षीरेण जुहोति" इति वाक्येन विधीयते । तत्प्रशंसार्थमत्र जर्तिलादिकमनूद्य निन्द्यते—**यथा** गवामश्वानां च प्रशंसार्थम् "अपशवो वा अन्ये गो अश्वेभ्यः" इति वाक्येनार्थवादरूपेणाजादीनां पशुत्वं निन्द्यते, **तद्वत्** । एवं तर्ह्यजादेर्**यथा** वस्तुतः पशुत्वमस्ति, **तथा** जर्तिलादिविधिरत्र निन्द्यमानोऽपि क्वचिच्छाखान्तरे भवेदिति चे**द्भवतु** नाम । प्रामाण्यमपि तच्छाखाध्यायिनं प्रति भविष्यति ॥ **यथा** गृहस्थाश्रमे निषिद्धमपि परान्नभोजनमाश्रमान्तरेषु प्रामाणिकं **तद्व**दनेन न्यायेन सर्वत्र परस्परविरुद्धौ विधिनिषेधौ पुरुषभेदेन व्यवस्थापनीयौ । **यथा** मन्त्रेषु पाठभेदः शाखाभेदेन व्यवस्थितत्वात्तैत्तिरीयाः—"वायव स्थोपायव स्थ" इति मन्त्रमामनति । वाजसनेयिनस्तु "उपायव स्थ" इत्येनं भागं नामनन्ति ॥ प्रत्युत शतपथब्राह्मणे स भागोऽनूद्य निराकृतः । **तथा** सूक्तवाकमन्त्रे शाखान्तरपाठं निराकृत्य पाठान्तरं तैत्तिरीया आमनन्ति—"यद्ब्रूयात्सूपावसाना च स्वध्यवसाना चेति प्रमायुको यजमानः स्यादिति निराकरणम् । सूपचरणा च स्वधिचरणा चेत्येव ब्रूयादिति पाठान्तरोपदेशः । तत्रानुष्ठातृपुरुषभेदेन व्यवस्था तद्विधिषु द्रष्टव्या ॥ षोडशिग्रहणादिदूषणं त्वश्रुतमीमांसावृत्तान्तस्य तवैव शोभते । पूर्वमीमांसायां दशमाध्यायस्याष्टमेपादे षोडशिनो ग्रहणाग्रहणविकल्पो निर्णीतः । द्वितीयस्याध्यायस्य प्रथमे पादे कालान्तरभाविफलसिद्ध्यर्थमपूर्वं निर्णीतम् । **तद्व**दुत्तरमीमांसायां प्रथमाध्यायस्य चतुर्थे पादे " कारणत्वेन चाकाशादिषु यथा व्यपदिष्टोक्तेः " [ १४ ] इत्यस्मिन्सूत्रे जगत्कारणे परमात्मनि श्रुतिविप्रतिपत्तिर्निराकृता । द्वितीयस्याध्यायस्य प्रथमे पादे आरम्भणाधिकरणे तु " असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात् " [ १७ ] इति सूत्रे तैत्तिरीयवाक्यगतस्यासच्छब्दस्य न शून्यपरत्वम् । किं त्वव्यक्तावस्थापरत्वमिति निर्णीतम् ॥–॥ **तथा** जैमिनिश्चोदनासूत्रे "विधिवाक्यं धर्मे प्रमाणम्" इति प्रतिज्ञायौत्पत्तिकसूत्रे तत्प्रामाण्यं समर्थयामास । व्यासोऽपि "शास्त्रयोनित्वात्" [ १ । १ । ३ । ] इति

सूत्रे वेदान्तानां ब्रह्मणि प्रामाण्यं प्रतिज्ञाय "तत्तु समन्वयाद्" [ १ । १ । ४ । ] इत्यादिसूत्रैः समर्थयामास ॥ तस्मादमीमांसकस्य तव पूर्वोक्तस्थान एवंविधन्यायो दुष्परिहरः । अतो विधिभागस्य प्रमाण्यं सुस्थितम् ।

"अर्थवादभागस्य प्रामाण्यं महता प्रयत्नेन **जैमिनिः** समर्थयामास–तत्सूत्राणि व्याख्यास्यन्ते। तत्र पूर्वपक्षं सूत्रयति–"आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यमुच्यते" [१।१।२।] इति। आम्नायस्य सर्वस्य क्रियाप्रतिपादनाय प्रवृत्तत्वादक्रियाप्रतिपादकानामर्थवादानां नास्ति कश्चिद्विवक्षितः स्वार्थः । ते चार्थवादा एवमाम्नायन्ते–"सोऽरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्वम्" "स आत्मनो वपामुदखिदद्" "देवा वै देवयजनमध्यवसाय दिशो न प्रजानन्" इति । यस्मादीदृशस्य वाक्यस्य विवक्षितोऽर्थः कश्चिदपि नास्ति, तस्मादिदं वाक्यमनित्यमुच्यते ॥–॥ **यद्यप्यना**दित्वात्स्वरूपेणानित्यत्वं नास्ति। **तथापि** धर्मावबोधनलक्षणस्य नित्यकार्यस्याभावादनित्यैः काव्यालापैः समानत्वादप्रमाणमित्यर्थः ।

"**ननू**दाहृतानामर्थवादानामनुष्ठेये धर्मे प्रामाण्याभावेऽपि स्वार्थे प्रामाण्यमस्तु । तत्प्रत्यायकत्वेन स्वतः प्रामाण्यस्यापवदितुमशक्यत्वादित्याशङ्क्यान्येषु केषुचिदर्थवादेषु मानान्तरविरोधदर्शनादप्रामाण्ये सति "तद्दृष्टान्तेन सर्वेषामप्यर्थवादानामप्रामाण्यमित्यभिप्रेत्य सूत्रयति–"शास्त्रदृष्टविरोधाच्च" [१।२।२।] इति । शास्त्रविरोधो, दृष्टविरोधः, शास्त्रदृष्टविरोधः,–इति–**त्रिविधो विरोधो**ऽर्थवादेषूपलभ्यते ॥ **तथा हि**–"स्तेनं मनोऽनृतवादिनी वाग्" इत्यत्र श्रूयमाणं मानसं चौर्यं, वाचिकमनृतवदनं च प्रतिषेधशास्त्रेण विरुद्धम ॥ **तथा** "तस्माद्धूम एवाग्नेर्दिवा ददृशे नार्चिस्तस्मादर्चिरेवाग्नेर्नक्तं ददृशे न धूमः" इत्यत्र दृष्टविरोधः॥ **तथा** "न चैतद्विद्मो वयं ब्राह्मणा वास्मोऽब्राह्मणा वा" इत्यत्रापि प्रत्यक्षविरोधः ॥ "को हि तद्वेद यद्यमुष्मिँल्लोकेऽस्ति वा न वा" इत्यत्र शास्त्रदृष्टेन

विरोधः । "स्वर्गकामो यजेत" इत्यादिशास्त्रे ह्यामुष्मिकं फलं दृश्यते ॥ तस्माद्विरोधादर्थवादानामप्रामाण्यम् ।

"**ननु** "सोरोदीद्" इत्यादीनां निष्प्रयोजनत्वात् "स्तेनं मनः" इत्यादीनां चविरोधादप्रामाण्येपि फलप्रतिपादकानामर्थवादानां तदुभयवैलक्षण्यादस्तु प्रामाण्यमित्याशङ्क्योत्तरं सूत्रयति—"तथा फलाभावाद्" [ १।२।३। ] इति॥ **यथा** मानान्तरविरुद्धमर्थवादैरुक्तं, **तथा** फलमप्यविद्यमानमेव तैरुच्यते॥ **तथा हि**—गर्गत्रिरात्रं प्रकृत्य श्रूयते—"शोभतेस्य मुखं य एवं वेद" इति॥ दर्शपूर्णमासयोर्वेदाभिमर्शनं प्रकृत्य श्रूयते "आस्य प्रजायां वाजी जायते य एवं वेद" इति ॥ **न च** वयं वेदितॄणां तत्फलमुपलभामहे ।

"**नन्वै**हिकफलवाक्यानां विसंवादादप्रामाण्येऽप्यामुष्मिकफलवाक्यानामस्तु प्रामाण्यमित्याशङ्क्योत्तरं सूत्रयति—" अन्यानर्थक्याद् " [ १ । २ । ४ । ] इति। एवं हि श्रूयते—" पूर्णाहुत्या सर्वान्कामानवाप्नोति पशुबन्धयाजी सर्वाँल्लोकानभिजयति तरति मृत्युं तरति पाप्मानं तरति ब्रह्महत्यां योऽश्वमेधेन यजते य उ चैनमेवं वेद " इति । तत्राग्न्याधेयगतया पूर्णाहुत्या सर्वकामप्राप्तेरन्यान्यग्निहोत्रादीन्युत्तरकालीनान्यनर्थकानि स्युः ॥–॥ **तथा** निरूढपशुबन्धानुष्ठानेन सर्वलोकाभिजयाज्ज्योतिष्टोमादीनामानर्थक्यमध्ययनकालीनेनैवाश्वमेधवेदनेन ब्रह्महत्यादितरणात्तदनुष्ठानं च व्यर्थं स्यात् । तस्मादामुष्मिकफलवाक्यानामप्यप्रामाण्यम् ।

"**ननु** मा भूत्फलवाक्यानां प्रामाण्यम् । **तथापि** निषेधवाक्येषु विरोधानुपलम्भादस्तु प्रामाण्यमित्याशङ्क्योत्तरं सूत्रयति' अभागिप्रतिषेधाद्" [ १ । २ । ५ । इति । "न पृथिव्यामग्निश्चेतव्यः, नान्तरिक्षे, न दिवि " इत्यत्रान्तरिक्षस्य च दिवश्च प्रतिषेधभागित्वं नास्ति । तत्र चयनप्रसङ्गस्यैवाभावात् । मा भूत्तर्हि निषेधानां प्रामाण्यम् । " बबरः प्रावाहणिरकामयत " इत्यादीनां पूर्वपुरुषवृत्तान्ताभिधायिनां विरोधानुपलम्भादस्तु प्रामाण्यमित्याशङ्क्योत्तरं सूत्रयति—" अनित्यसंयोगाद्" [ १ । २ । ६ । ] इति । बबरादिस्वरूपेणानित्यत्वेनार्थेन संयोगे

सत्यस्य वाक्यस्य ततः पूर्वमभावात्कालिदासादिवाक्यवत्पौरुषेयत्वं प्रसज्येत ॥ **किं बहुना ॥ सर्वथापि नास्त्येवार्थवादानां प्रामाण्यमिति पूर्वः पक्षः ।**

"**सिद्धान्तं** सूत्रयति–" विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्युः " [ १ । २ । ७ । ] इति । तुशब्दोऽर्थवादानामप्रामाण्यं वारयति । "वायुर्वै क्षेपिष्ठा" इत्येवमादीनामार्थवादानां "वायव्यᳪश्वेतमालभेत" इत्यादिना विधिना सहैकवाक्यत्वादस्ति धर्मे प्रामाण्यम् ।**न च** विधिवाक्यस्यार्थवादनैरपेक्ष्येण पदान्वयसंपूर्तेस्तत्रार्थवादानां नास्त्युपयोग इति शङ्कनीयम् । ते ह्यर्थवादाः पुरुषप्रवृत्तिमाकाङ्क्षतां विधीनां स्तुत्यर्थत्वेनोपयुक्ताः स्युः । स्तुत्या च प्रलोभितः पुरुषस्तत्र प्रवर्तते ॥

**नन्वर्थ**वादानां प्रमादपठितत्वेनोपेक्षणीयत्वात्किमनेनैकवाक्यताप्रयासेनेत्याशङ्क्याह–" तुल्यं च साम्प्रदायिकम् " इति । अनध्यायवर्जनादिनियमपुरःसरं गुरुसम्प्रदायादध्ययनं यत्तत्साम्प्रदायिकम् । तच्च विधीनामर्थवादानां च समानम् । तस्माद्विधिवदेतेषामपि प्रमादपाठो न भवति ॥

**ननु** "शास्त्रदृष्टविरोधाच्च" इत्येवमर्थवादेष्वनुपपत्तिरुक्तेत्याशङ्क्याह– "अप्राप्ताचानुपपत्तिः प्रयोगे हि विरोधस्स्याच्छब्दार्थस्त्वप्रयोगभूतस्तस्मादुपपद्यते" [१।२।९।]इति॥ **तन्त्रवार्तिके** त्वेतत्सूत्रमध्याहृत्य **त्रिधा** व्याख्यातम्–अप्राप्तां चानुपपत्तिम्,अप्राप्ता चानुपपत्तिः,अप्राप्तं चानुपपत्तिमिति॥"स्तेनं मनः" इत्यादौ शास्त्रविरोधाद्यनुपपत्तिरप्राप्तप्रयोगस्यानुक्तत्वात् । प्रयोगे हि स्तेयादीनामुच्यमाने शास्त्रविरोधः स्यात् । **न चात्र** स्तेयं कर्तव्यमिति प्रयोग उच्यते।किं तु स्तेयशब्दार्थ उच्यते॥ **न च** स्तेयशब्दार्थः प्रयोगभूतः ॥ तस्माच्छब्दार्थवचनमात्रेण शास्त्रविरोधाभावादयमर्थवाद उपपन्न एव॥–॥**ननु** स्तुत्यर्थेन विधीनां स्युरिति **यदुक्तं, तदसत्** । वैयधिकरण्यात् । "वेतसशाखया चावकाभिश्च विकर्षत्यापो वै शान्ताः" [ तै० सं० ।५।४। ४ । ] इत्यत्र वेतसावके विधीयेते, आपश्च स्तूयन्त,–इति वैयधिकरण्यमित्याशङ्क्याह–

" गुणवादस्तु " [ १ । २ । १० । ] इति । तुशब्दो वैयधिकरण्यदोषं वारयति । गुणवादो ह्यत्र विवक्षितः । **यथा** लोके—काश्मीराभिजनो देवदत्तः काश्मीरदेशेषु स्तूयमानेषु स्तुतमात्मानं मन्येत, **एव**मत्राप्यद्भ्यो जाते वेतसावके अप्सु स्तुतासु ते एव स्तुते भवतः । शान्ताभ्योऽद्भ्यो जातत्वाद्वेतसावके स्वयमपि शान्ते सत्यौ यजमानस्यानिष्टं शमयत इत्येतादृशस्य गुणस्य वादोत्राभिमेतः । " सोरोदीद् " इत्यत्रापि रजतस्य पतिताश्रुरूपत्वाद्रजतदाने गृहेऽपि रोदनप्रसङ्गाद् "बर्हिषि रजतं न देयम्" इति तन्निषेधेन विधेयेनार्थवादस्यैकवाक्यत्वम् । तत्र रजतदानाभावे रोदनाभावरूपो गुणोऽत्र विवक्षितः । तेन च गुणेन रजतदाननिवारणरूपो विधिः स्तूयते ॥–॥ **यद्यपि** रजतस्याश्रुप्रभवत्त्वमत्यन्तमसत् । **तथापि** यथोक्तरीत्या विधेः स्तुतिः संपद्यते । " यः प्रजाकामः पशुकामः स्यात्स एतं प्राजापत्यमजं तूपरमालभेत " [ तै० सं० । २ । १ । १ । ] इत्ययं विधिः प्रजापतिवपोत्खेदेन स्तूयते । **यस्मा**त्प्रजापतिः स्ववपामप्युत्खिद्याग्नौ प्रहृत्य ततो जातं तूपरमजमात्मार्थमालभ्य प्रजाः पशूंश्च लब्धवान् । **तस्मा**त्प्रजादिसम्पादकोऽयं तूपर इति तूपरगुणस्य वादोऽत्र विवक्षितः । " आदित्यः प्रायणीयश्चरुः " [ तै० सं० । ६ । १ । ७ । ] इत्येष विधिः " दिशो न प्राजानन् " [ तै० सं० ६ । १ । ५ । ४ । ] इत्यनेन दिङ्मोहेन स्तूयते । **यथे**यमदितिर्देवता दिङ्मोहमप्यपनीय दिग्विशेषं ज्ञापयति, **तथा** बहुविधकर्मसमुदायरूपे सोमयागेऽनुष्ठानविषयं भ्रममपनयतीति किमु वक्तव्यमित्येवमदितिदेवतागतस्य गुणस्य वादोऽत्र विवक्षितः । स्वकीयवपोत्खेदो देवयजनाध्यवसानमात्रेण दिङ्मोहश्चेत्युभयमस्तु वा मा वा ॥ सर्वथापि स्तुतिपरत्वमभ्युपगतवतामस्माकं न किञ्चिद्धीयते । "शिखा ते वर्धते वत्स गुडूचीं श्रद्धया पिब" इत्यादावविद्यमानेनाप्यर्थेन लोके स्तुतिदर्शनात् ॥–॥ **अथ**पूर्वपक्षिणा शास्त्रविरोधं दर्शयितुं यदुदाहृतं " स्तेनं मनोऽनृतवादिनी वाग् " इति, तत्रोत्तरं सूत्रयति–" रूपात्प्रायाद् " [ १ । २ । ११ । ] इति । " हिरण्यं

हस्ते भवत्यथ गृह्णाति " इत्येतं विधिं स्तोतुमयमर्थवाद उच्यते । **यथा** लोकेऽपि किमृषिणा, देवदत्त एव पूजयितव्य इत्यत्र देवदत्तपूजां स्तोतुमेवौदासीन्यमृषावुपन्यस्यते, न तु पूज्यत्वमृषेर्वारयितुम्, **एवम**त्रापि हस्ते हिरण्यग्रहणं प्रशंसितुं मनसः स्तेनरूपत्वं वाचोनृतवादित्वं चोपन्यस्यते । तत्र गुणवादेन शब्दार्थौ योजनीयः । **यथा**–स्तेनाः प्रच्छन्नरूपाः, **एवं**–मनोऽपीति प्रच्छन्नरूपत्वमत्र गुणः । प्रायेण वागनृतं वक्तीति प्रायिकत्वं तत्र गुणः । हस्तस्तु न प्रच्छन्नो नाप्यनृतबहुलः । अतो हस्ते हिरण्यधारणं प्रशस्तमिति स्तूयते ॥–॥ **यदपि** दृष्टविरोधाय " धूम एवाग्नेर्दिवा ददृशे " इत्यादिकमुदाहृतं तत्रोत्तरं सूत्रयति–" दूरभूयस्त्वाद् " [ १ । २ । १२ । ] इति । " अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा " [ ब्रा० । ५ । ३ । १ । ] इति सायं जुहोति, " सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति प्रातः " इत्येतौ विधी स्तोतुं सोऽर्थवादः । **यस्मा**दर्चिर्दिवा न दृश्यते, **तस्मा**त्सूर्यमन्त्र एव प्रातः प्रयोक्तव्यः । **यस्मा**द्रात्रावर्चिरेव दृश्यते, **तस्मा**दग्निमन्त्रो रात्रौ प्रयोक्तव्यः, सूर्यमन्त्रश्च दिवेत्येवं तयोर्मन्त्रयोः स्तुतिः ॥ धूमार्चिषोरदर्शनोपन्यासस्तु दूरभूयस्त्वगुणनिमित्तः । भूयसि हि दूरे पर्वताग्रे वृक्षादयोऽपि न विस्पष्टं दृश्यन्ते । किं तु तृणसादृश्येन तेषां दर्शनाभास एव । **तद्व**दत्रापि॥–॥ **यदप्यन्य**दृष्टविरोधायैवोदाहृतम् । " **न चैत**द्विद्मो वयं ब्राह्मणा वा स्मोऽब्राह्मणा वा " इति, तत्रोत्तरं सूत्रयति–" स्त्र्यपराधात्कर्त्तुश्च पुत्रदर्शनाद् " [ १ । २ । १३ । ] इति । प्रवरे प्रव्रियमाणे ब्रूयाद् " देवाः पितरः " इति । अस्य विधेस्तावकोऽयमर्थवादः । **यदि** यजमानो " देवाः पितरः " इत्यादि मन्त्रेण प्रवरमनुमन्त्रयेत, तदानीमब्राह्मणोऽपि ब्राह्मणो भवेदित्यनुमन्त्रणस्य स्तुतिः । "**न चैत**द्विद्मः" इत्येतदज्ञानवचनं दुर्ज्ञानत्वगुणेन तत्र प्रयुज्यते । **यत्र** स्त्रिया अपराधो भवति, **तत्र** कर्त्तुरुत्पादयितुर्जारस्यापि पुत्रो दृश्यते ॥ अतः पत्युपपत्योरुभयोः पुत्रदर्शनात्स्वकीयं जन्म कीदृशमिति दुर्ज्ञानम् । अनेनाभिप्रायेण प्रयुक्तत्वान्नास्ति तत्र

दृष्टविरोधः । न हि तत्र दृश्यमानं स्वब्राह्मण्यमपवादितुं " न चैतद्विद्मः " इत्युपन्यस्तम् ॥—॥ **यदपि** शास्त्रीयदर्शनविरोधायोदाहृतं—"को हि तद्वेद यद्यमुष्मिँल्लोकेऽस्ति वा नवा" इति, तत्रोत्तरं सूत्रयति—"[१२१४]औकालिकेप्सा" इति। " दिक्ष्वतीकाशान्करोति " इति प्राचीनवंशस्य द्वारविधिः । **तस्य** शेषोऽयं " को हि तद्वेद " इति । धूमाद्युपद्रवपरिहारेण प्रत्यक्षेण फलेन द्वारविधिः स्तूयते । स्वर्गप्राप्तिरूपं तु **फलमाकालिकम्** । अकाले भवमाकालिकं विप्रकृष्टकालीनम् । न त्विदानीन्तनमित्यर्थः । तस्येप्सा—तस्य प्राप्तुमिच्छा।सा च"को हि तद्वेद" इत्यनिश्चयोपन्यासे कारणम्। **यथा** भाविकलिकः पौत्रप्रपौत्रादिवृत्तान्तो निश्चेतुं न शक्यते, **तद्वत्**स्वर्गप्राप्तिर्भाविकालिकेति गुणयोगादनिश्चयोपन्यासः । धूमादिपरिहारस्तु प्रत्यक्षत्वान्निश्चित इत्यभिप्रायः ।

"**यदप्यन्य**दृष्टविरोधायोदाहृतं— "शोभतेऽस्य मुखं य एवं वेद" इति, तत्रोत्तरं सूत्रयति—"विद्याप्रशंसा" [ १ । २ । १५ । ] इति । सोऽयं गर्गत्रिरात्रविधेः शेषः । तद्विषयं वेदनमपि मुखशोभाहेतुः। किमुतानुष्ठानमिति स्तूयते । **यथा**—कर्णाभरणादिना मुखं शोभितं भवति, **एवं** वेदितुरुत्साहेन विकसितं वदनं शोभितमिव शिष्यैरुद्वीक्ष्यते । अतः शोभासादृश्यगुणयोगाच्छोभत इत्युच्यते ॥

"**यद्यप्यन्या**द्विरोधायोदाहृतम् । 'आस्य प्रजायां वाजी जायते य एवं वेद"इति, सोऽपि वेदानुमन्त्रणविधेः शेषः । अत्रापि कैमुतिकन्यायेन स्तुतिः पूर्ववद्योजनीया । वेदितुः पुत्रः पितृशिक्षया स्वयमपि विद्वान्भवति । ततः प्रतिग्रहेणान्नं प्राप्नोति । तस्मादीदृशं गुणमभिप्रेत्य "वाजी जायते" इत्युक्तम् ।

"**यद्यप्यन्या**नर्थक्यायोदाहृतं—"पूर्णाहुत्या सर्वान्कामानवाप्नोति" इति, तत्रोत्तरं सूत्रयति "सर्वत्वमाधिकारिकम्" [१।२।१६।] इति । "पूर्णाहुतिं जुहुयाद्" इत्यस्य विधेः शेषोऽयम् । सर्वकामावाप्तिहेतुत्वात्प्रशस्तेयमाहुतिरिति स्तूयते । **यथा**—सर्वे ब्राह्मणा भोजयितव्या इत्यत्र सर्वत्वं स्वगृहागतब्राह्मणविषयम्, **एवं** पूर्णा-

हुत्या कर्मसाङ्गत्वे यत्फलं तस्मिन्नधिकारे प्रस्तावे संभावितं तद्विषयमेव सर्वत्वं द्रष्टव्यम् । पूर्णाहुतेरभावे सत्याधानरूपं कर्माऽङ्ग-विकलं भवति । तच्च वैकल्यं पूर्णाहुत्या समाधियत इत्येकः **कामः।** तस्मिन्समाहिते सत्याहवनीयाद्यग्नयोऽग्निहोत्रादिकर्मसु योग्या भवन्ती-त्ययमन्यः **कामः** । तैश्च कर्मभिस्तत्तत्फलं प्राप्यत इति **कामा-न्तरम्** । ईदृशी सर्वकामावाप्तिराहुत्यन्तरेष्वपि विद्यत इति **चेद्** । **विद्यतां नाम ।** किंनश्छिन्नम् । न खल्वेतावता पूर्णाहुतिस्तुतेः काचिद्धानिरस्ति ।

"**ननु** पूर्णाहुतेरङ्गस्वभावत्वात्तदीयफलश्रुतेरर्थवादत्वेन स्तावकत्वं भवतु । "द्रव्यसंस्कारकर्मसु परार्थत्वात् फलश्रुतिरर्थवादः" [ जै. । ४ । ३ । १ । ] इति सूत्रेण निर्णीतत्वात् । पशुबन्धवाक्यस्य तु कर्मविधायकत्वात्सर्वलोकाभिजयस्य मुख्यफलत्वादन्यानर्थक्यं दुर्वारमित्याशकङ्क्योत्तरं सूत्रयति–" फलस्य कर्मनिष्पत्तेस्तेषां लोक-वत्परिमाणतः सारतो वा फलविशेषः स्याद्" [१ । २ । १७ ।] इति। पृथिव्यन्तारिक्षद्युलोकेष्वन्यतमलोकाभिजयरूपं फलं पशुबन्धकर्मणा नि-ष्पद्यते।तेषां च पृथिव्यादीनां फलानां कर्मान्तरेण परिमाणाधिक्यं,सारत्वं वा,--संपद्यते । ततः फलविशेषः स्यादिति नास्त्यानर्थक्यम् । लोकव-दित्युक्तार्थे दृष्टान्तः । **यथा**--लोके–निष्केण खारीपरिमितान्व्रीही-न्विक्रीय निष्कान्तरेण पुनः क्रये सति परिमाणाधिक्यं भवति, **यथा वा**–निष्केण वस्त्रमात्रं लभ्यते, निष्कद्वयेन तु सारभूतं दुकूलं,**तथा**–भोगाधिक्यं, भोगसारत्वं वा,–कर्मान्तरेण द्रष्टव्यम् । ब्रह्महत्याया अपि मानस्याः स्वल्पाया वेदनमात्रेण तरणम् । कायिक्यास्तु महत्या अश्वमेधेनेति नास्त्यानर्थक्यम् । योऽपि "नान्तरिक्षे न दिवि" इत्यग्न सक्तप्रतिषेध उदाहृतः, **तथा** "बबरः प्रावाहाणिः" इत्यनित्यसंयोग उदाहृतः, तत्रोभयत्रोत्तरं सूत्रयति–"अन्त्ययोर्यथोक्तम्" [१।२।१८।] इति । अन्त्ययोरनयोरुदाहरणयोरुत्तरं पूर्वोक्तमेव द्रष्टव्यम्। अन्तरिक्षादौ चयननिन्दारूपोऽर्थवादो, "हिरण्यं निधाय चेतव्यम्" इत्यस्य विधेः

शेषः। अतोऽत्र "स्तुत्यर्थेन विधीनां स्युः"इत्युक्तमेवोत्तरम्। अन्तरिक्षे चयनप्रसक्त्यभावात् तन्निन्दा। नित्यानुवादोऽस्तु। तेनापि विधिः स्तोतुं शक्यते। नित्यसिद्धार्थानुवादिना वायोः क्षेपिष्ठत्वेन पशुविधेः स्तुतत्वात्। "बबरः प्रावाहणिरकामयत" इत्यत्रापि बबरनामकः कश्चिदनित्यः पुरुषो मनुष्यो न विवक्षितः। किं तु बबरध्वनियुक्तः प्रकर्षेण वहनशीलो वायुर्व्यवहारदशायां नित्य एवार्थो विवक्षित इत्येतदुत्तरं ( १ ध्या० )-प्रथमपादस्यान्तिमाधिकरणे प्रोक्तम्॥ **तस्मात्संभावितदोषाणां परिहृतत्वादर्थवादानामस्ति प्रामाण्यम्।**

"**तत्र सङ्ग्रहश्लोकः**-

"वायुर्वा इत्येवमादेरर्थवादस्य मानता॥
न विधेयेस्ति धर्मे किं किं वासौ तत्र विद्यते॥ १॥
विध्यर्थवादशब्दानां मिथोपेक्षापरिक्षयात्॥
नास्त्येकवाक्यता धर्मे प्रामाण्यं सम्भवेत्कुतः॥ २॥
विध्यर्थवादौ साकांक्षौ प्राशस्त्यपुरुषार्थयोः॥
तेनैकवाक्यता तस्माद्वादानां धर्ममानता॥ ३॥ इति।

"तदेवं वेदे विद्यमानानां त्रयाणां मन्त्रविध्यर्थवादभागानामप्रामाण्ये कारणाभावाद्बाधकानां तेषां प्रामाण्यस्य स्वतस्त्वाङ्गीकाराच्च कृत्स्नस्यापि वेदस्य प्रामाण्यं सिद्धम्।

"**नन्वे**मपि वेदस्य पौरुषेयत्वेन विप्रलम्भकवाक्यवदप्रामाण्यं स्यात्। पौरुषेयत्वं च प्रथमपादे पूर्वपक्षत्वेन जैमिनिः सूत्रयामास-"वेदांश्चैके सन्निकर्षं पुरुषाख्या" [ १।१।२७। ] इति॥ एके वादिनो वेदान्प्रति सन्निकर्षं मन्यन्ते **कालिदासादि**भिर्निर्मितानां **रघुवंशादि**ग्रन्थानाम्। समुच्चयार्थश्चकारः। ते ह्यत्र दृष्टान्ततया समुच्चीयन्ते। **यथा**-रघुवंशादय इदानीन्तनाः,**तथा** वेदा अपि। न तु वेदा अनादयः। अत एव वेदकर्तृत्वेन पुरुषा आख्यायन्ते-वैयासिकं भारतं, वाल्मीकीयं रामायणमित्यत्र **यथा**-भारतादिकर्तृत्वेन व्यासादय आख्यायन्ते,

**तथा**—काठकं, कौथुमं, तैत्तिरीयमित्येवं तत्तद्वेदशाखाकर्तृत्वेन कठादीनामाख्यातत्वाद्वेदाः पौरुषेयाः ।

"**ननु** नित्यानामेव सतां वेदानामुपाध्यायवत्सम्प्रदायप्रवर्तकत्वेन काठकादिसमाख्या स्यादित्याशङ्क्य युक्त्यन्तरं सूत्रयति—" अनित्य-दर्शनाच्च " [ १ । १ । २८ । ] इति ॥ अनित्या जननमरणवन्तो बबरादयो वेदार्थे श्रूयन्ते—" बबरः प्रावाहणिरकामयत " । " कुसुरु-बिन्द औद्दालकिरकामयत " [ तै० सं० । ७ । २ । २ । ] इति।तथा सति बबरादिभ्यः पूर्वमभावादनित्या वेदाः । विमतं वेदवाक्यं, पौरुषेयं, वाक्यत्वात्, कालिदासादिवाक्यवदित्याद्यनुमानसमुच्चयार्थश्चकारः ।

" सिद्धान्तं सूत्रयति—" उक्तं तु शब्दपूर्वत्वम् " [ १ ।१। २९। ] इति। तुशब्दो वेदानामनित्यत्वं वारयति।शब्दस्य वेदरूपस्य कठादिपुरुषे-भ्यः पूर्वत्वमनादित्वं प्राचीनैरेव सूत्रैरुक्तम् । "औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः" [जै०१।१ । ५ ।] इत्यस्मिन्सूत्रे औत्पत्तिकशब्देन सर्वेषां—शब्दानां—वेदानां, तदर्थानां, तदुभयसम्बन्धानां च,—नित्यत्वं प्रतिज्ञायो-त्तराभ्यां शब्दाधिकरणवाक्याधिकरणाभ्यामुपपादितत्वात् ।

" **का तर्हि** काठकाद्याख्यायिकाया गतिरित्याशङ्क्य सम्प्रदाय-प्रवर्तनात्सेयमुपपद्यत इत्युत्तरं सूत्रयति—" आख्या प्रवचनाद् " [ १ । १ । ३० ] इति । अस्त्वियमाख्यायिकाया गतिः । ततः परं बबराद्यनित्यदर्शनं **यदुक्तं,—तस्य** किमुत्तरमित्याशङ्क्योत्तरं सूत्रयति—" परं तु श्रुतिसामान्यमात्रम् " [ १ । १ । ३१ ] इति । यत्परं बब-रादिकं तच्छब्दसामान्यमेव । न तु मनुष्यो बबरनामकोऽत्र विवक्षितः। बबरध्वनियुक्तस्य प्रवहणस्वभावस्य वायोरत्र वक्तुं शक्यत्वात् ।

" **ननु** वेदे क्वचिदेवं श्रूयते—" वनस्पतयः सत्रमासत " " सर्पाः सत्रमासत " इति । तत्र वनस्पतीनामचेतनत्वात्सर्पाणां चेतनत्वेऽपि विद्यारहितत्वान्न तदनुष्ठानं सम्भवति । अतो " जरद्गवः—गायति

(१) द्वारस्थितः कम्बलपादुकाभ्यां जरद्गवो गायति मद्रकाणि । तं ब्राह्मणी पृच्छति पुत्रकामा राजन्रुमायां लशनस्य कोऽर्थः " इति श्लोकः ।

मद्रकाणि " इत्याद्युन्मत्तबालवाक्यसदृशत्वात्केनचित्कृतो वेद इत्याशङ्क्योत्तरं सूत्रयति–" कृते चाविनियोगः स्यात्कर्मणः समत्वाद् " [ १ । १ । ३२ । ] इति ॥ **यदि** ज्योतिष्टोमादिवाक्यं केनचित्पुरुषेण क्रियेत, **तदानीं** कृते तस्मिन्वाक्ये स्वर्गसाधनत्वे ज्योतिष्टोमस्य विनियोगो न स्यात् । साध्यसाधनभावस्य पुरुषेण ज्ञातुमशक्यत्वात् । श्रूयते तु विनियोगो "ज्योतिष्टोमेन स्वर्गकामो यजेत" इति॥ **न चै**तदुन्मत्तवाक्यसदृशं लौकिकविधिवाक्यवत् । भाव्यकरणेतिकर्तव्यतारूपैस्त्रिभिरंशैरुपेताया भावनाया अवगमात् । लोके हि ब्राह्मणान्भोजयेदिति विधौ किं केन कथमित्याकाङ्क्षायां तृप्तिमुद्दिश्यौदनेन द्रव्येण शाकसूपादिपरिवेषणप्रकारेणेति **यथो**च्यते, **तथा** ज्योतिष्टोमविधावपि स्वर्गमुद्दिश्य सोमेन द्रव्येण दीक्षणीयाद्यङ्गोपकारप्रकारेणेत्युक्ते कथमुन्मत्तवाक्यसदृशं भवेदिति । वनस्पत्यादिसत्रवाक्यमपि न तत्सदृशम् । तस्य सत्रकर्मणो ज्योतिष्टोमादिना समत्वात् । " यत्परो हि शब्दः–स शब्दार्थः " इति न्यायविद आहुः । ज्योतिष्टोमादिवाक्यस्य विधायकत्वादनुष्ठाने तात्पर्यम् । वनस्पत्यादिसत्रवाक्यस्यार्थवादत्वात्प्रशंसायां तात्पर्यम् । सा चाविद्यमानेनापि कर्तुं शक्यते । अचेतना अविद्वांसोऽपि सत्रमनुष्ठितवन्तः । किं पुनश्चेतना विद्वांसो ब्राह्मणा इति सत्रस्तुतिः । चकारः पूर्वपक्षोक्तस्य वाक्यत्वहेतोः कर्त्रनुपलम्भेन पराहतिं समुच्चिनोति । तस्मान्नास्तिवेदस्य पौरुषेयत्वम् ।

" **अत्रैतौ सङ्ग्रहश्लोकौ–**

पौरुषेयं न वा वेदवाक्यं स्यात्पौरुषेयता ।
काठकादिसमाख्यानाद्वाक्यत्वाच्चान्यवाक्यवत् ॥ १ ॥
समाख्यानं प्रवचनाद्वाक्यत्वं तु पराहतम् ।
तत्कर्त्रनुपलम्भेन स्यात्ततोऽपौरुषेयता ॥ २ ॥

" **ननु** भगवता बादरायणेन वेदस्य ब्रह्मकार्यत्वं सूत्रितम्–" शास्त्रयोनित्वाद् " [ १ । १ । ३ । ] इति । ऋग्वेदादिशास्त्रकारणत्वाद्ब्रह्म सर्वज्ञमिति सूत्रार्थः । **बाढम् ।** नैतावता पौरुषेयत्वं भवति ।

मनुष्यनिर्मितत्वाभावात्। ईदृशमपौरुषेयत्वमभिमेत्य व्यवहारदशाया-माकाशादिवन्नित्यत्वं बादरायणेनैव देवताधिकरणे सूत्रितम्—" अत एवचनित्यत्वम्" [ १ । ३ । २९ ] इति। श्रुतिस्मृती चात्र भवतः—" वाचा विरूपनित्यया " [ तै० सं० २ । ६ । ११ ] इति श्रुतिः। " अनादिनिधाना नित्या वागुत्सृष्टा स्वयंभुवा " [ ] इति स्मृतिः ॥ तस्मात्कर्तृदोषशङ्काया अनुदयान्मन्त्रब्राह्मणात्मकस्य वेदस्य निर्विघ्नं प्रामाण्यं सिद्धम्।

" **ननु** मन्त्रब्राह्मणात्मकत्वं वेदस्य न युक्तं, तयोः स्वरूपस्य निर्णेतुमशक्यत्वात् ॥ **मैवम्**॥ द्वितीयाध्यायस्य[1] प्रथमे पादे **सप्तमा-ष्टमयोरधिकरणयो**र्निर्णीतत्वात्।

"**सप्तमाधिकरणमारचयति**—

" अहे बुध्निय मन्त्रं मे इति मन्त्रस्य लक्षणम्।
नास्त्यस्ति वास्य नास्त्येतदव्याप्त्यादेरवारणात् ॥ १ ॥
याज्ञिकानां समाख्यानं लक्षणं दोषवर्जितम्।
तेऽनुष्ठानस्मारकादौ मन्त्रशब्दं प्रयुञ्जते ॥ २ ॥

" **आधान इदमाम्नायते**—" अहे बुध्निय मन्त्रं मे गोपाय ' [ तै० ब्रा० । १ । २ । १ । ] इति। तत्र मन्त्रस्य लक्षणं नास्ति। अव्याप्त्यतिव्याप्त्योर्वारयितुमशक्यत्वात्। विहितार्थाभिधायकः-**मन्त्रः**-इत्युक्ते " वसन्ताय कपिञ्जलानालभते " इत्यस्य मन्त्रस्य विधिरूप-त्वादव्याप्तिः। मननहेतुः-**मन्त्रः**-इत्युक्ते ब्राह्मणेऽतिव्याप्तिः। **एवम**सिपदान्तः-**मन्त्रः**, उत्तमपुरुषान्तः- **मन्त्रः**,-इत्यादि-लक्षणानां परस्परमव्याप्तिरिति **चेत्** ॥ **मैवम्** ॥ याज्ञिकसमाख्यानस्य निर्दोषलक्षणत्वात्। तच्च समाख्यानमनुष्ठानस्मारकादीनां मन्त्रत्वं गम-यति।" उरुप्रथस्व " [ तै० सं० १ । १ । ८ । ] इत्यादयोऽनुष्ठा-नस्मारकाः। " अग्निमीळे पुरोहितम् " इत्यादयः स्तुतिरूपाः। " इषे

( १ ) तदुपर्यधिकरणे इति पाठान्तरम्।
( २ ) जैमिनीयन्यायमालायाम्।

त्वा " इत्यादयस्त्वान्ताः । " अग्न आयाहि वीतये " [ तै० ब्रा० ३।५ । २ । ] इत्यादय आमन्त्रणोपेताः । "अग्नीदग्नीन्विहर " [ तै० सं० । ६ । ३ । १ । ] इत्यादयः प्रैषरूपाः। " अधः स्विदासि ३-दुपरि स्विदासि ३ द् " [ तै० ब्रा० २ । ८ । ९ । ] इत्यादयो विचाररूपाः । " अम्बेअम्बाल्यम्बिके न मा नयति कश्चन " [ तै०सं० । ७ ।४ ।१८] इत्यादयः परिदेवनरूपाः। " पृच्छामि त्वा परमन्तं पृथिव्याः " [ तै० सं० ७ । ४ । १७ । ] इत्यादयः प्रश्न-रूपाः । " वेदिमाहुः परमन्तं पृथिव्याः " [ तै० सं०।७ । ४ । १७।] इत्यादय उत्तररूपाः । **एवमन्यदप्युदाहार्यम्** । ईदृशेष्वत्यन्त-विजातीयेषु समाख्यानमन्तरेण नान्यः कश्चिदनुगतो धर्मोऽस्ति । यस्य लक्षणत्वमुच्येत ।

"लक्षणस्य चोपयोगः पूर्वाचार्यैदर्शितः—

"ऋषयोऽपि पदार्थानां नान्तं यान्ति पृथक्त्वशः ।
लक्षणेन तु सिद्धानामन्तं यान्ति विपश्चितः ॥ १ ॥ इति ॥

" तस्मादभियुक्तानां मन्त्रोऽयमिति समाख्यानं लक्षणम् ॥

**"अष्टमाधिकरणमारचयति**—

" नास्त्येतद्ब्राह्मणेन्यत्र लक्षणं विद्यतेऽथ वा ।
नास्तीयन्तो वेदभागा इति क्लृप्तेरभावतः ॥ १ ॥
मन्त्रश्च ब्राह्मणं चेति द्वौ भागौ तेन मन्त्रतः ।
अन्यद्ब्राह्मणमित्येतद्भवेद्ब्राह्मणलक्षणम् ॥ २ ॥

" **चातुर्मास्येष्विदमाम्नायते**—" एतद्ब्राह्मणान्येव पञ्च हवीं-षि " [ ऐ० ब्रा० । १ । ७ । १ । ] इति । तत्र ब्राह्मणस्य लक्षणं नास्ति । **कुतः** । वेदभागानामियत्तानवधारणेन ब्राह्मणभागेष्वन्यभा-गेषु च लक्षणस्याव्याप्त्यतिव्याप्त्योः शोधयितुमशक्यत्वात् ।

" **पूर्वोक्तो** मन्त्रभाग एकः । भागान्तराणि च कानिचित्पूर्वैरुदा-हर्तुं संगृहीतानि—

" हेतुर्निर्वचनं निन्दा प्रशंसा संशयो विधिः । परक्रिया पुराकल्पो-व्यवधारणकल्पना॥१॥इति ॥ तेन ह्यन्नं क्रियत इति–हेतुः । "तद्दध्नो दधित्वम् " [ तै० सं० । २ । ५ । ३ । इति–निर्वचनम् " अमेध्या वै माषाः " [ तै० सं० । ५ ।३ । ८ । ] इति–निन्दा । " वायुर्वै क्षेपिष्ठा देवता " इति–प्रशंसा । " तद्व्यचिकित्सज्जुहवानि ३ माहौ ष३म् " [ तै० ब्रा० । २ । १ । २ । ] इति–संशयः । " यजमानेन सम्मितौदुम्बरी भवति " [ तै० सं० । ६ । २ । १० । ] इति-विधिः । " माषानेव मह्यं पचन्ति " इति–परकृतिः । " पुरा ब्राह्मणा अभैषुः [ तै० सं० । १ । ५ । ७ । ] इति–पुराकल्पः । " यावतो-श्वान्प्रतिगृह्णीयात्तावतो वारुणांश्चतुष्कपालान्निर्वपेद् " [ तै० सं० । २ । ३ । १२ । ] इति विशेषावधारणकल्पना । एवमन्यदप्युदाहार्यम् ॥ **न च** हेत्वादीनामन्यतमं–**ब्राह्मण**मिति लक्षणम् । मन्त्रेष्वपि हेत्वादिसद्भावात् । " इन्दवो वामुशन्ति हि" [ऋ० सं० । १।१।३ । ] इति–हेतुः । " उदानिषुर्महीरिति तस्मादुदकमुच्यते " [ तै० सं० । ५ । ६ । १ । ] इति–निर्वचनम् । " मोघमन्नं विन्दते अप्रचेताः " [ ऋ० सं० । ८ । ६ । २३ । ]इति–निन्दा। " अग्निर्मूर्धा दिवः । " [ ऋ० सं० । ६ । ३ । २९ । ] इति–प्रसंशा । " अधः स्विदासि ३ दुपरि स्विदासि ३ द् " इति–संशयः । " वसन्ताय कपिञ्जलानालभते " इति–विधिः । " सहस्रमयुता ददद् " इति–परकृतिः । "यज्ञेन यज्ञमयजन्त देवाः" [ऋ० सं० । ८। ४ । १९।] इति–पुराकल्पः । **इतिकरणबहुलं–ब्राह्मण**मिति चेत् ॥ **न** ॥ "इत्यददाः, इत्ययजथाः, इत्यपचः, इति ब्राह्मणो गायेद्" इत्यस्मिन्ब्राह्मणेन गातव्ये मन्त्रेऽतिव्याप्तेः ॥ **इत्याह**इत्यनेन वाक्येनोपनिबद्धं–**ब्राह्मणमिति चेत्** ॥ **न** ॥ " राजाचिद्यं भगं भक्षीत्याह " [ऋ०सं०। ५ । ४।८ ।] "यो वा रक्षाः शुचिरस्मीत्याह" [ऋ० सं० । ५ । ७ । ८ । ] इत्यनयोर्मन्त्रयोरतिव्याप्तेः ॥ **आख्यायिकारूपं–ब्राह्मणमिति चेत्** ॥ **न** ॥ यमयमीसंवादसूक्ता–[ ऋ० सं०

। ७ । ६ ।६। ]–दावतिव्याप्तेः ॥ तस्मान्नास्ति ब्राह्मणस्य लक्षणम् ॥

"**इति प्राप्ते ब्रूमः** ॥ मन्त्रब्राह्मणरूपौ द्वावेव वेदभागावित्यङ्गीकारात् । मन्त्रलक्षणस्य पूर्वमभिहितत्वादवशिष्टो वेदभागः-**ब्राह्मणमि**त्येतल्लक्षणं भविष्यति ॥ तदेतल्लक्षणद्वयं जैमिनिः सूत्रयामास–"तच्चोदकेषु मन्त्राख्या" [ २ । १ । ३२ । ] "शेषे ब्राह्मणशब्दः" [२।१।३३। इति । तस्मिन्वेदे केषुचिदभिधायकेषु वाक्येषु मन्त्र इति समाख्या सम्प्रदायविद्भिर्व्यवह्रियते–" मन्त्रानधीमहे " इति।मन्त्रव्यतिरिक्तभागे तु ब्राह्मणशब्दस्तैर्व्यवहृत इत्यर्थः ।

" **ननु** ब्रह्मयज्ञप्रकरणे मन्त्रब्राह्मणव्यतिरिक्ता इतिहासादयो भागा आम्नायन्ते–" यद्ब्राह्मणानीतिहासान्पुराणानि कल्पान्गाथा नाराशँसीः" [ तै०आर० २ अध्या०।] इति ॥ **मैवम्** ॥ विप्रपरिव्राजकन्यायेन ब्राह्मणाद्यवान्तरभेदानामेवेतिहासादीनां पृथगभिधानात् ।' ' देवासुराः संयत्ता आसन्"इत्यादयः–इतिहासाः।"इदं वा अग्रे नैव किञ्चनासीद्" [ तै० ब्रा० । २ । २ । ९ । ] इत्यादिकं जगतः प्रागवस्थामुपक्रम्य सर्गप्रतिपादकं वाक्यजातं--पुराणम् । कल्पस्त्वारुणकेतुकचयनप्रकरणे सामाम्नायते–" इति मन्त्राः । कल्पोऽत ऊर्ध्वम् । यदि बलिँ हरेद् " इत्यग्निचयने । " यमगाथाभिः परिगायति " [ तै० आर० पितृ० मेध० ] इति विहिता मन्त्रविशेषा-गाथाः । मनुष्यवृत्तान्तप्रतिपादिका ऋचः( **कुन्तापे** )–नाराशंस्यः।। तस्मान्मन्त्रब्राह्मणव्यतिरिक्त भागाभावान्मन्त्रब्राह्मणस्वरूपस्य च लक्षितत्वादुभयात्मकत्वं वेदस्य सुस्थितम् " इति ।

वेदे पूर्वोत्तरकाण्डयोः क्रमेण धर्मब्रह्मणी–**विषयः** । तयोरनन्यलभ्यत्वात् । तथा च **पुरुषार्थानुशासने** सूत्रितम्–" धर्मब्रह्मणी वेदैकवेद्ये " इति । **जैमिनीये** च द्वितीयसूत्रे " चोदनैव धर्मे प्रमाणम्" " चोदनाप्रमाणमेव" इति नियमद्वयं सम्प्रदायविद्भिरभिहितम् । चोदनैवेत्यमुमर्थमुपपादयितुं चतुर्थसूत्रे प्रत्यक्षविषयत्वं धर्मस्य निराकृतम् । "प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वाद्" इति । अनुष्ठानादूर्ध्व-

मुत्पत्स्यमानस्य धर्मस्य पूर्वमविद्यमानत्वान्न प्रत्यक्षयोग्यतास्ति । उत्तरकालेऽपि रूपादिराहित्यान्नेन्द्रियैरवगम्यते । अत एवादृष्टमिति सर्वैरभिधीयते । लिङ्गराहित्यान्नानुमानविषयत्वमप्यस्ति ॥ सुखदुःखे धर्माधर्मयोर्लिङ्गमिति चेद् ॥**बाढम्**॥ अयमपि लिङ्गलिङ्गिभावो वेदेनैव गम्यते । ततश्चोदनैव धर्मे प्रमाणम् । **वैयासिकस्य तृतीयसूत्रस्य द्वितीयवर्णके**–ब्रह्मणः सिद्धवस्तुनोऽपि शास्त्रैकविषयत्वं भाष्यकृद्भिर्व्याख्यातं–"शास्त्रादेव प्रमाणाज्जगतो जन्मादिकारणं ब्रह्माधिगम्यत इत्यभिप्रायः" इति । श्रुतिश्च भवति–" नावेदविन्मनुते तं बृहन्तम् " इति । तत्रोपपत्तिः पूर्वाचार्यैरेवमुदीरिता–"रूपलिङ्गादिराहित्यान्नास्य मानान्तरयोग्यता"इति ॥ तस्मादनन्यलभ्यत्वादस्ति धर्मब्रह्मणोर्वेदविषयत्वम् ।

तदुभयज्ञानं वेदस्य साक्षात्**प्रयोजनम्** । न च तस्य ज्ञानस्य सप्तद्वीपावसुमती, राजाऽसौ गच्छतीत्यादिज्ञानवदपुरुषार्थपर्यवसायित्वं शङ्कनीयम् । धर्मप्रयुक्तस्य पुरुषार्थस्य स्तूयमानत्वात् । " धर्मो विश्वस्य जगतः प्रतिष्ठा, लोके धर्मिष्ठं प्रजा उपसर्पन्ति, धर्मेण पापमपनुदति, धर्मे सर्वं प्रतिष्ठितं, तस्माद्धर्मं परमं वदन्ति" इति । उद्दण्डस्य राज्ञो नियामकत्वाद्,विवदमानयोः पुरुषयोर्मध्ये दुर्बलस्यापि राजसाहाय्य वज्जयहेतुत्वाच्च,–धर्मः–पुरुषार्थः ॥ तथा च **वाजसनेयिनः सृष्टिप्रकरणे** समामनन्ति–" तच्छ्रेयोरूपमत्यसृजत धर्मं तदेतत्क्षत्रस्य क्षत्रं यद्धर्मस्तस्माद्धर्मात्परं नास्त्यथो बलीयान्बलीयांसमाशंसते धर्मेण यथैव राज्ञैवम् " इति । " ब्रह्मविदाप्नोति परम् " " ब्रह्म वेद ब्रह्मैव भवति ", " तरति शोकमात्मविद् " इत्यादिश्रुतिषु ब्रह्मज्ञानप्रयुक्तः पुरुषार्थः प्रसिद्धः ॥

तदुभयज्ञानार्थी वेदेऽ**धिकारी** । स च **त्रैवर्णिकः** पुरुषः । **स्त्रीशूद्रयोस्तु**–सत्यामपि ज्ञानापेक्षायामुपनयनाभावेनाध्ययनराहित्याद्वेदेऽधिकारः प्रतिषिद्धः । धर्मब्रह्मज्ञानं तु पुराणादिमुखेनोत्पाद्यते॥ तस्मात्त्रैवर्णिकपुरुषाणां वेदमुखेनार्थज्ञानेऽधिकारः ।

**सम्बन्धस्तु**—वेदस्य धर्मब्रह्मभ्यां सह प्रतिपाद्यप्रतिपादकभावः, तदीयज्ञानेन सह जन्यजनकभावः, त्रैवर्णिकपुरुषैस्सहोपकार्योपकारकभावः ॥ **तदेवं** विषयाद्यनुबन्धचतुष्टयमवगत्य समाहितधियः श्रोतारो वेदव्याख्याने प्रवर्तन्ताम् ॥

**अत्रा**तिगम्भीरस्य वेदस्यार्थमवबोधयितुं शिक्षादीनि षडङ्गानि प्रवृत्तानि। अत एव तेषामपरविद्यारूपत्वं **मुण्डकोपनिषद्याथर्वणिका** आमनन्ति—" द्वे विद्ये वेदितव्ये इति ह स्म यद्ब्रह्मविदो वदन्ति परा चैवापरा च । तत्राऽपरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति । अथ परा यया तदक्षरमधिगम्यते " इति । साधनभूतधर्मज्ञानहेतुत्वात्षडङ्गसहितानां कर्मकाण्डाना**मपरविद्यात्वं**, परमपुरुषार्थभूतब्रह्मज्ञानहेतुत्वादुपनिषदां **परविद्यात्वम**बाधकत्वात्स्वत एव सिद्धम् । पौरुषेयवाक्यं तु बोधकमपि सत्पुरुषगतभ्रान्तिमूलत्वसम्भावनया तत्परिहाराय मूलप्रमाणमपेक्षते । न तु वेदः ॥ तस्य नित्यत्वेन वक्तृदोषशङ्कानुदयात् । एतदेव **जैमिनिना** सूत्रितम्—"—तत्प्रमाणं बादरायणस्यानपेक्षत्वाद्" [ १।१।५। ] इति॥ **ननु** वेदोऽपि कालिदासादिवाक्यवत्पौरुषेय एव । ब्रह्मकार्यत्वश्रवणात्—"ऋचःसामानि जज्ञिरे।छन्दांऽसि जज्ञिरे तस्मात्। यजुस्तस्मादजायत" इति श्रुतेः।अत एव बादरायणः "शास्त्रयोनित्वाद्" इति सूत्रेण ब्रह्मणो वेदकारणत्वमवोचत् ॥ **मैवम्** ॥ श्रुतिस्मृतिभ्यां नित्यत्वावगमात् । " वाचा विरूपनित्यया " इति श्रुतेः । "अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा" इति स्मृतेश्च । बादरायणोऽपि देवताधिकरणे सूत्रयामास—" अत एव च नित्यत्वम्" इति ॥—॥ **तर्हि** परस्परविरोध इति **चेत्** ॥ **न** ॥ नित्यत्वस्य व्यावहारिकत्वात् ॥ सृष्टेरूर्ध्वं संहारात्पूर्वं व्यवहारकालः । तस्मिन्नुत्पत्तिविनाशादर्शनात् । कालाकाशादयो **यथा** नित्या **एवं** वेदोऽपि व्यवहारकाले कालिदासादिवाक्यवत्पुरुषविरचितत्वाभावान्नित्यः । आदिसृष्टौ तु कालाकाशादिवदेव ब्रह्मणः सकाशाद्वेदोत्पत्तिरा-

म्नायते । अतो विषयभेदान्न परस्परविरोधः। ब्रह्मणो निर्दोषत्वेन वेदस्य वक्तृदोषाभावात्स्वतः सिद्धं प्रामाण्यं तदतिस्पष्टम् । तस्माल्लक्षणप्रमाण-सद्भावाद्विषयप्रयोजनसम्बन्धाधिकारिसद्भावात्प्रामाण्यस्य सुस्थत्वाच्च वेदो व्याख्यातव्य एव ।

यथोक्तविषयादिसद्भावमभिप्रेत्य "स्वाध्यायोऽध्येतव्यः" इत्यध्ययनं विधीयते ।

**स्यादेवं--यदि** वेदानामपौरुषेयत्वं भवेत्तदेवासिद्धम् । **तथा हि**–वेदवाक्यानि, पौरुषेयाणि, वाक्यत्वाद्, यदुक्तसाधनं, तदुक्तसाध्यम् । **यथा**–भारतादिवाक्यम् । उक्तसाधनानि च वेद-वाक्यानि । तस्मात्पौरुषेयाणि वेदवाक्यानि ॥ **पौरुषेयत्वं नाम**–स्वतन्त्रपुरुषपूर्वकत्वमभिमतम् । अतः क्रमवन्तो वर्णाः–**पदम्** । क्रमवन्ति च पदानि–**वाक्यम्** । क्रमश्च नित्यवर्णेषु स्वत एवा-सम्भवादुच्चारणक्रमनिबन्धन एव । उच्चारणक्रमश्च पुरुषप्रयत्नसाध्य एवेति वेदवाक्यान्यपि क्रमवत्त्वेन पुरुषप्रयत्ननिष्पाद्यान्येवेति सिद्ध-साधनत्वं वदतामनवकाश एव ॥–॥ **ननु किमत्र** साक्षात्स्वत-न्त्रपुरुषपूर्वकत्वं विवक्षितम्–**आहोस्वित्**–परम्परया । **नाद्यः ।** इदानीमुच्चार्यमाणेषु बाधितविषयत्वादनुवक्तृप्रणीतास्मदादिवाक्येष्व-नैकान्तिकत्वाच्च । **नापि द्वितीयः ।** साक्षात्स्वतन्त्रपुरुषप्रणीतेष्व-स्मदादिवाक्येष्वनैकान्तिकत्वादिति **चेत् ॥ मैवम् ।** साक्षात्पर-म्परात्वयोः परस्परव्यभिचारेऽपि साक्षात्परम्परात्वयोरन्यतरस्यैवात्र विवक्षितत्वात् । अन्यथा भारतादिवाक्यान्यपि यानि कृष्णद्वैपाय-नादिना साक्षात्प्रणीतानि, न तानि परम्परया, यानि परम्परया, न तानि साक्षादित्युभयानुगतपौरुषेयत्वाभावेनान्यतरस्यापौरुषेयत्वप्रस-ङ्गात् । तस्माद्यद्वाक्यं तत्साक्षात्परम्परया वा स्वतन्त्रपुरुषपूर्वकमिति साधयतां न क्वचिद्बाधो न व्यभिचारश्चेति सिद्धं वेदाः पौरुषेया इति॥

**तदिदमसमञ्जसम् । तथा हि**–सर्वत्र वाक्येषु वृद्धव्यव-हारावगतपदपदार्थसम्बन्धस्य चक्षुरादिजन्यतत्तत्पदार्थविशेषविषयपर-

स्परविलक्षणक्षणिकज्ञानवतः शरीरिण एव स्वतन्त्रकर्तृत्वं दृष्टमिति वाक्यत्वं तादृशकर्तृत्वेन व्याप्तं सत्स्वव्यापकं पक्षे साधयत्स्वाभिमतमशरीरिकर्तृकत्वं विरुणद्धीति विशेषविरुद्धत्वाद्धेतोर्न **चास्योत्तर**स्योत्कर्षसमायामन्तर्भावः । सर्वत्र वाक्यत्वस्य हेतोः शरीरिकर्तृकत्वेन व्याप्ततया दृष्टत्वात् ।

**स्यादेतद्**–अस्तु तर्ह्यत्राप्यनित्यज्ञानेच्छादिमतः शरीरिण एव कर्तृत्वम् । **न च** योग्यानुपलब्धिबाधः । चिरवृत्ते कर्तर्युपलब्धियोग्यत्वस्यैव भावादिति ॥ **एतदपि न चतुरचेतसां चेतसि चमत्कारं प्राश्नाति** । अपसिद्धान्तापातात् ॥–॥ **किं च यदि** वेदवाक्यानां शरीरी कर्त्ता स्यात्तस्य चिरवृत्तत्वेनोपलब्ध्यभावेप्यसौ स्मृतिपथमवतरेत् । **न च** स्मर्यते॥तस्मान्नास्त्येव कर्त्तेति निश्चीयते ।

**स्यादेतत्–केनचिदस्मरणं** वा हेतुः–**आहोस्वित्**–सर्वैरस्मरणम् । **नाद्यः** । देवदत्तेनास्मृतस्यापि घटस्य विष्णुमित्रगृहे विद्यमानत्वात् । **नापि द्वितीयः** । जैमिनीयैरस्मरणेपि कणादाक्षचरणपक्षिलमुनिपक्षिपतिभिस्स्मर्यमाणत्वादिति ॥ **न** ॥ तदीयैरपि वृद्धव्यवहारावगतपदपदार्थसम्बन्धस्य तदर्थविषयविलक्षणक्षणिकचक्षुरादिजन्यवेदनस्य मातापितृसम्बन्धप्रसूतपार्थिवशरीरस्य कर्त्तुरस्मरणात् ॥ तदेवं वेदवाक्येषु यादृशस्य स्वतन्त्रपुरुषस्य ते स्मरन्ति तादृशस्य वाक्यत्वमस्मत्पारिपन्थित्वेन न विरोधकम् । जैमिनीयैस्तु सर्वैः स्मर्तुं योग्यस्याप्यस्मरणाद्योग्यस्मृत्यनुदय एव बाधक इति वाक्यत्वं हेतुर्विरुद्धः समस्तसविशेषत्वेन स्वतन्त्रपुरुषपूर्वकत्वमपि साधयितुमसमर्थ इति सिद्धो विशेषविरोधस्तस्य ।

**स्यादेतद्**–"पुराणंसर्वशास्त्राणां प्रथमं ब्रह्मणा स्मृतम् । अनन्तरं च वक्त्रेभ्यो वेदास्तस्य विनिःसृताः"(मात्स्ये) "ऋग्वेद एवाग्नेरजायत यजुर्वेदो वायोः सामवेद आदित्यात्" "तस्माद्यज्ञात्सर्वहुतः। ऋचः सामानि जज्ञिरे।छन्दाँसि जज्ञिरे तस्माद्।यजुस्तस्मादजायत" इत्यादयो वेदकारणवादा वेदस्य पौरुषेयत्वे प्रमाणमिति ॥ **तदयुक्तम्** ॥ तेषां

परस्परविरुद्धार्थतया, प्रमाणान्तरप्रतिहततया च "प्रजापतिरात्मनो वपामुदक्खिदद्" इत्यादिवदर्थवादत्वेनाप्युपपत्तेः स्वार्थे तात्पर्याभावात् । काठकादिसमाख्यापि प्रवचननिबन्धनैव भविष्यतीति सिद्धं वेदानामपौरुषेयत्वम् । अत एव च नित्यत्वम् ॥

## तार्किकमतखण्डनम्--

तन्नित्यत्वमसहमानाः **शुष्कतार्किका वैदिकान्प्रति विवन्दते,** प्रयुञ्जते च शब्दानित्यत्वेऽनुमानम्-- 'शब्दः, अनित्यः, कृतकत्वाद् । यत्कृतकं तदनित्यं दृष्टम् । यथा घटः । तथा चायं कृतकः । तस्मादनित्य एव' इति । **एतदधीरम्** । एतच्च पर्वतादौ धर्मिणि प्रत्यक्षे यथा॰ वह्न्याद्यनुमानं तादृशं तार्किकैरङ्गीकरणीयम् । ततश्चैतदनुमानबलादेव शब्दस्य नित्यत्वसिद्धिः । **तथाहि**--अणवः, अनित्याः, मूर्तत्वाद्घटवदित्यनुमाने यथा--धर्मिग्राहकप्रमाणबाधो दोषस्तथा शब्दकृतकत्वानुमानेपि । **तथा हि**--शब्दः कथं प्रत्यक्षो **देवानाम्प्रियस्य** । यो धर्मी कृतकस्तस्यानित्यत्वान्नित्यत्वशून्य इति **चेत् । तर्हि वक्तव्यम् ॥ किं** धर्मद्वयस्याभाववान्-**उत**-तद्भाववान् । उभयथापि बाधः । अन्यथा प्रत्यक्षमर्थमन्यथा साधयतो वादिबुद्धिविशेषाद्धर्मद्वयमापतति । न तु वस्तुविशेषात । वस्तुनि द्वैरूप्यायोगात् । ततश्च यस्मिन्वादिविप्रतिपत्तौ सत्यां धर्मद्वयमापतति, स शब्दः पक्ष इत्यङ्गीकारे कथं बाधः । एवमनङ्गीकारे सर्वानुमानोच्छेदप्रसङ्गः ॥ **अस्त्वेवमन्यत्र** । शब्दे तु वैषम्यमस्ति । शब्दः **किं** धर्मित्वेन प्रतीतः प्रत्यक्षव्याप्तिपक्षधर्मतयोराश्रय उत्पत्तित उत्तरक्षणेषु स एव तिष्ठति **वा न वा । यदि** न तिष्ठति, आश्रयासिद्ध्यादिदोषः । **यदि** तिष्ठति, **तर्ह्यने**कक्षणावस्थायित्वात्क्षणिकत्वभङ्गः । **अथ च** शब्दत्वजातिमाञ्शब्दस्तिष्ठतीति **चेत् ॥ तत्रापि विचारयत्वायुष्मान्**-**किं** जातिस्तिष्ठति-**उत** व्यक्तिरपि। **यदि** जातिस्तिष्ठति, व्यधिकरणासिद्ध्यादिदोषः । **न हि** शब्दत्वजातिः पक्ष इति भवद्भिरेवोक्तम् । अनित्यव्यक्तेश्चावस्थाने

पूर्वोक्तदोषावकाशः ॥ **अथ च** काचन व्यक्तिस्तिष्ठति, **तदापि** शब्दव्यक्तीनां धर्मित्वाङ्गीकाराद्भागासिद्धो हेतुः । **न हि** भविष्यच्छब्द इदानीं वर्तमानस्य कृतकत्वस्य हेतोराश्रयो भवति ॥ **कृतकत्वं नाम** करणव्यापारविषयत्वम् । तच्च कालत्रयासंस्पृष्टं सर्वशब्देषु वर्तत इति हेतोर्न भागासिद्धिरिति चेद् ॥ **अहो पाण्डित्यं तार्किकस्य**—यत्र कालत्रयसंस्पृष्टशब्दबुद्धिः—स्वयं कालत्रयातीतं प्रत्यक्षीकृतवानिति । **ततः** प्रत्यक्षाभावेऽनुमानमपि **दूरापास्तम्** । ततोस्मिन्ननुमाने पर्वतादिवत्स्थायी वर्तमानः शब्दः पक्षत्वेनाङ्गीकरणीयः । तस्य धर्मिणोऽनित्यत्वसिद्धावपरेषां भविष्यदादिशब्दनामपि शब्दत्वेन हेतुनाऽनित्यत्वं साधनीयम् । **एवं च**—महीमहीधरादिकृतकत्वानुमानवच्छब्दकृतकत्वानुमानमपि **परास्तं वेदितव्यम्** । शब्दग्राहि च प्रमाणं तं कृतकत्वशून्यमेव गृह्णातीति महीमहीधरवदिति धर्मिग्राहकप्रमाणबाधः, त्वदुक्तो हेतुरन्यतराऽसिद्धश्च ।

## स्फोटवादः--

तस्मान्नित्यः शब्दः सोपि **स्फोट इति शाब्दिकाः** शब्दायन्ते । तत्रेमां **श्रुतिं प्रमाणयन्ति**—" शब्दब्रह्म यदेकं यच्चैतन्यं च सर्वभूतानाम् । यत्परिणामस्त्रिभुवनमखिलमिदं जयति सा वाणी " इति । **अस्यायमर्थः** । शब्द एव ब्रह्म । तदेकमेकं च । स्फोटव्यतिरिक्तमन्यन्न सम्भवति । वर्णानामनेकत्वाद् । अत एव न ध्वनयोपि । पदवाक्ययोरेकत्वशङ्कापि नास्त्येव । वर्णैर्विरचितत्वात्तेषां ध्वनिवर्णपदवाक्येभ्यो वा नान्यः शब्दः प्रसिद्धोस्ति । लोकवेदयोः शब्दब्रह्मेति पठन्ति । लौकिका वैदिकाश्च पदज्ञा अप्येवमाहुः—एकमक्षरमेकं पदमेकं वाक्यमित्युत्पन्नापवर्गिष्वनेकेषु वर्णेष्वेकबुद्धेर्विषयः स्फोटो बृहत्वाद् ब्रह्मशब्दाभिधेयः । स्फुट्यतेऽर्थः प्रकाश्यतेऽनेनेति—**स्फोटः** ॥

**नन्वर्था**भिव्यञ्जकश्चेच्छब्दस्तर्हि वर्णात्मक एव सः । ज्ञातेषु वर्णेष्वर्थो ज्ञायत इति प्रसिद्धिः । **नैतत्** । वर्णात्मकशब्दोऽर्थप्रत्यायक

इति—**कोर्थः**। एकैको वर्णोऽर्थप्रत्यायकः **उत**—अनेक इति । **न ताव-देकैकः** । आकारादीनां वर्णानां प्रत्येकं वर्णोच्चारणेऽर्थप्रतीतेरभावात् । **न चाव्ययानां** तिरस्काराद्यर्थप्रत्यायकत्वं दृष्टमिति मन्तव्यम् । " अव्ययादाप्सुपः " [ पा० सू० । २ । ४ । ८२ । ] इति विभक्तौ लुप्तायां तेषामर्थप्रत्यायकत्वात् । **न** तु प्रातिपदिकावस्थायाम् । ततश्च 'अ' 'इ' 'उ'—इति वर्णानां तिरस्काराश्चर्यादरार्थानां तेषां पदात्मकत्वेनानेकवर्णात्मकत्वादर्थप्रत्यायकत्वम् । **न ह्यदर्शनमात्रेण** विभक्तिवर्णानामसत्त्वम् । तथात्वे सम्बुद्धिप्रातिपदिकार्थयोरेकत्वप्रसङ्गाद् । अनिष्टं च तच्छाब्दिकानाम् ॥ तथा चाव्ययानामेवार्थप्रत्यायकत्वम् । न वर्णानामेकैकशः । अव्ययानि च पदविशेषा इत्युक्तम् । **एतेनोप-सर्गादीनि सर्वाणि व्याख्यातानि** । ततोऽनेके वर्णा अर्थप्रत्यायका इति ते वक्तव्यम् । अयमपि पक्षो **न** कक्षीकरणीयः । अपदात्मकस्य कचटतपेत्यादिरूपस्यार्थप्रत्यायकत्वादर्शनात्पदात्मकोऽनेकोवर्णोऽर्थप्र-त्यायक इति सारं स्थितम् ।

**पदं** च सुबन्तं तिङन्तं वा । तच्च प्रातिपदिककृत्तद्धितधातुसमास प्रकृतिकम् । तत्सर्वं वर्णस्वरूपमेव । न तु ततोऽतिरिक्तं पदमस्ति । वर्णेभ्योऽतिरिक्तस्य पदस्यादर्शनात् । **ननु** वर्णगतो धर्मः कश्चन—**पद**-मिति । यथा व्यक्तिगतो जातिविशेषो गोत्वमिति । **एवं चेदेकगोव्य**-क्तिदर्शने गोत्वप्रतीतिवदेकैकवर्णदर्शने पदप्रतीतिः स्यात् । ततो वर्णानां समुदायविशेषः—**पद**मिति वक्तव्यम् । तच्चार्थप्रत्यायकमिति वर्णनीयम् । तेन पदसमुदायविशेषो वाक्यमित्युपपादितं भवति । वर्णन्यायस्य पदे सञ्चरणात् ॥—॥ **नन्वस्त्वेवं**—तावत् वर्णा एव शब्द इति ॥ **भवता प्युक्तम्** । पदवाक्यात्मकानां वर्णानामर्थप्रत्यायकत्वकथनेन भावानव-बोधाद् । भावश्चायम् । **यदि** वर्णाः—नित्याः, **यदि** वा—अनित्याः, उभयथापि तेषां समुदायो नोपपन्नः । नित्यानां तु—गुणत्वे, सर्वगतद्र-व्यत्वे वा,--पञ्चाशत्सङ्ख्याकानां तेषां मेलनं केन कर्त्तुं शक्यम् ॥ **न चवं** वर्णानां स्थानप्रयत्नवैयर्थ्यप्रसङ्गः । नित्यानामेव तेषां स्थान-

प्रयत्नाभ्यामेवाभिव्यज्यमानत्वात् ॥ **न चाभिव्यक्तेरपि** समुदायः कर्तुं शक्यः । वर्णाभिव्यक्तेर्ज्ञानरूपत्वात् । ज्ञानानां च क्रमेण जायमानत्वात् । युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गमिति न्यायात् । क्रमेण जायमानानां क्षणिकानां तेषामेकस्मिन्देशे, काले वा,--मेलनस्य कर्तुमशक्यत्वात् । **न च** मेलनादन्यः समुदायोऽस्ति । तस्माद्वर्णनित्यत्वेपि स्पष्टः समुदायाभावः । **कथं** वर्णसमुदायः पदं, पदसमुदायो वाक्यमर्थप्रत्यायकं स्याद् । अस्ति त्वर्थप्रत्ययः शब्दात् । ततः शब्दतत्त्वमन्यदेव" इत्यथर्ववेदभाष्योपक्रमे ।

## श्रीमधुसूदनाचार्योक्तप्रस्थानचन्द्रिकानुवादः–

"**तत्र**र्ग्वेदो यजुर्वेदः सामवेदोऽथर्ववेद इति–**वेदाश्चत्वारः** ॥ त्रयीव्यवहारस्तु तुरीयस्यर्ग्वेदादित्रयशेषत्वमभिप्रेत्येति न तद्विरोधः । **शिक्षा** कल्पो व्याकरणं निरुक्तं छन्दो ज्यौतिषमिति **वेदाङ्गानि षट्** ॥ पुराणानि न्यायो मीमांसा धर्मशास्त्राणि चेति **चत्वार्युपाङ्गानि** ॥ अत्रोपपुराणानामपि पुराणेष्वन्तर्भावः । वैशेषिकशास्त्रस्य न्याये, वेदान्तशास्त्रस्य मीमांसायां, महाभारतरामायणयोः साङ्ख्यपातञ्जलपाशुपतवैष्णवागमादीनां च धर्मशास्त्रेष्विति मिलित्वा **चतुर्दशविद्याः** । तथा च याज्ञवल्कीये–" पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः । वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश " इति । एता एव चतुर्भिरुपवेदैः सहिता **अष्टादश विद्या** भवन्ति । " आयुर्वेदो धनुर्वेदो गान्धर्ववेदोऽर्थशास्त्रं च"इति **चत्वार उपवेदाः** । सर्वेषां चास्तिकानामेतावन्त्येव शास्त्रप्रस्थानानि । अन्येषामप्येकदेशिनामेष्वेवान्तर्भावात् ।

"**ननु** नास्तिकानामपि प्रस्थानान्तराणि सन्ति । तेषामेतेष्वनन्तर्भावात्पृथग्गणयितुमुचितानि । **तथा हि**– १शून्यवादेनैकं प्रस्थानं–**माध्यमिकानाम्** । २ क्षणिकविज्ञानमात्रवादेनापरं–**योगाचाराणाम्** । ३ज्ञानाकारानुमेयक्षणिकबाह्यार्थवादेनापरं–**सौत्रान्तिकानाम्** । ४ प्रत्यक्षस्वलक्षणक्षणिकबाह्यार्थवादेनापरं–**वैभाषिकाणाम्** । एवं

**सौगतानां प्रस्थानचतुष्टयम् ॥ तथा५** देहात्मवादेनैकंप्रस्थानं–**चार्वाकाणाम् । एवं** देहातिरिक्तदेहपरिणामात्मवादेन द्वितीयं प्रस्थानं–**दिगम्बराणाम् । एवं मिलित्वा नास्तिकानां षट् प्रस्थानानि** । तानि कस्मान्नात्र गृह्यन्ते ॥ **सत्यम्** ॥ वेदबाह्यत्वात्तु तेषां म्लेच्छादिप्रस्थानवत्परम्परयापि पुरुषार्थानुपयोगित्वादुपेक्षणीयत्वमेव।अत्र तु साक्षात्परम्परया वा पुमर्थोपयोगिनां वेदोपकरणानामेव प्रस्थानानां भेदः प्रदर्श्यत इति न न्यूनत्वशङ्कावकाशः ।

**"अथ संक्षेपेणैषां प्रस्थानानां स्वरूपभेदहेतुः प्रयोजनभेद उच्यते बालानां व्युत्पत्तये–**

"तत्र धर्मब्रह्मप्रतिपादकमपौरुषेयं प्रमाणवाक्यं–**वेदः** स च " मन्त्रब्राह्मणयोर्वेदनामधेयम् " इत्यापस्तम्बाद्युक्त्या मन्त्रब्राह्मणात्मकः। तत्र **मन्त्राः**–अनुष्ठानकारकभूतद्रव्यदेवताप्रकाशकाः।**ते५**--ऋग्यजुःसामभेदात्त्रिविधाः। तत्र पादबद्धगायत्र्यादिच्छन्दोविशिष्टाः–**ऋचः**–"अग्निमीळे" इत्याद्याः।**ता** एव गीतिविशिष्टाः--**सामानि**। **तदुभय**-विलक्षणानि– **यजूंषि** । " **अग्नीद**ग्नीन्विहर " इत्यादिसम्बोधनरूपा **निगदसंज्ञा** मन्त्रा अपि यजुरन्तर्भूता एवेति।एवं निरूपिता मन्त्राः।

"**ब्राह्मणमपि त्रिविधं**–विधिरूपमर्थवादरूपं तदुभयविलक्षणं च। तत्र शब्दभावना-**विधिः**--इति **भाट्टाः** । नियोगो--**विधिरिति--प्राभाकराः** । इष्टसाधनता–**विधि** रिति च **तार्किकाः** । **सर्वोपि विधिश्चतुर्विधः**--उत्पत्त्यधिकारविनियोगप्रयोगभेदात् । तत्र देवताकर्मस्वरूपमात्रबोधको विधिः--**उत्पत्तिविधिः** । "आग्नेयोष्टाकपालो भवति " इत्यादिः । सेतिकर्तव्यताकस्य करणस्य यागादेः फलसम्बन्धबोधको विधिः--**अधिकारविधिः**।"दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत"इत्यादिः।अङ्गसम्बन्धबोधको विधिः–**विनियोगविधिः**। " व्रीहिभिर्यजेत " " समिधो यजति" इत्यादिः । साङ्गप्रधानकर्मप्रयोगैक्यबोधकः पूर्वविधित्रयमेलनरूपः--**प्रयोगविधिः**॥ स च श्रौत इत्येके । कल्प **इत्यपरे । कर्मस्वरूपं च द्विविधं**--गुणकर्म, अर्थ-

कर्म च । तत्र क्रतुकारकाण्याश्रित्य विहितं–**गुणकर्म**। **तद**प्युत्पत्त्या-प्तिविकृतिसंस्कृतिभेदा**च्चतुर्विधम्** । तत्र " वसन्ते ब्राह्मणोऽग्नीनाद-धीत " " यूपं तक्षति " इत्यादावाधानतक्षणादिना संस्कारविशेषविशि-ष्टाग्नियूपादेः--**उत्पत्तिः** । " **स्वाध्यायो**ध्येतव्यः " " गाः पयो दोग्धि" इत्यादावध्ययनदोहनादिना विद्यमानस्यैव स्वाध्यायपयःप्रभृतेः--**प्राप्तिः** । " सोममभिषुणोति, " "व्रीहीनवहन्ति " " आज्यं विलाप-यति" इत्यादावभिषवावघातविलापनैः सोमादीनां--**विकारः**। "व्रीहीन्प्रो-क्षति " " पत्न्यवेक्षते " इत्यादौ प्रोक्षणावेक्षणादिभिर्व्रीह्यादिद्रव्याणां--**संस्कारः** । एतच्चतुष्टयं चाङ्गमेव ॥--॥ **तथा** क्रतुकारकाण्याश्रित्य विहितमर्थकर्मापि--**द्विविधम्**--अङ्गं, प्रधानं च । अन्यार्थम्–**अङ्गम्** । अनन्यार्थं--**प्रधानम्। अङ्गमपि द्विविधं**--सन्निपत्योपकारकमारादुप-कारकं च । तत्र प्रधानस्वरूपनिर्वाहकं--**प्रथमम्** । यथाऽवहननप्रो-क्षणादि फलोपकारि । **द्वितीय**–प्रयाजादि। एवं संपूर्णाङ्गसंयुक्तो विधिः--**प्रकृतिः** । विकलाङ्गसंयुक्तो विधिः--**विकृतिः** । तदुभयविलक्षणो विधिः–**दर्वीहोमः** । **एवम**न्यदप्यूह्यमिति ॥ **निरूपितो विधिभागः** ।

**प्राश**स्त्यनिन्दान्यतरलक्षणया विधिशेषभूतं वाक्यम्--**अर्थवादः**। **स त्रिविधः**--गुणवादोऽनुवादो भूतार्थवादश्चेति । तत्र प्रमाणान्तर-विरुद्धार्थबोधकः--**गुणवादः** । **यथा** " आदित्यो यूपः " इत्यादिः । प्रमाणान्तरप्राप्तार्थबोधकः–**अनुवादः** । **यथा**–" अग्निर्हिमस्य भेष-जम् " इत्यादिः । प्रमाणान्तरविरोधतत्प्राप्तिरहितार्थबोधकः- **भूतार्थ वादः** । यथा–"इन्द्रोवृत्राय वज्रमुदयच्छद् " इत्यादिः। तदुक्तं **वार्त्ति-ककृता**--"विरोधे गुणवादः स्यादनु वादोवधारिते। भूतार्थवादस्तद्धा नादर्थवादस्त्रिधा मतः " इति । तत्र त्रिविधानामप्यर्थवादानां विधिस्तु तिपरत्वे समानेऽपि भूतार्थवादानां स्वार्थेऽपि प्रामाण्यम् । देवताधि करणन्यायाद् ॥ अबाधिताज्ञातार्थज्ञापकत्वं हि–**प्रामाण्यम्** । तच्च बाधितविषयत्वाज्ज्ञातार्थज्ञापकत्वाच्च न गुणवादानुवादयोः । भूतार्थ

वादस्य तु स्वार्थेतात्पर्यरहितस्याप्यौत्सर्गिकं प्रामाण्यं न विहन्यते। तदेवं **निरूपितोऽर्थवादभागः** ॥

विध्यर्थवादोभयविलक्षणं तु-**वेदान्तवाक्यम्**। तच्चाज्ञातज्ञापकत्वे नुष्ठानाप्रतिपादकत्वान्न विधिः । स्वतः पुरुषार्थपरमानन्दज्ञानात्मकब्रह्मणि स्वार्थ उपक्रमोपसंहारादिषड्विधतात्पर्यलिङ्गवत्तया स्वतःप्रमाणभूतान्सर्वानपि विधीनन्तःकरणशुद्धिद्वारा स्वशेषतामापादयदन्यशेषत्वाभावाच्च नार्थवादः ॥ तस्मादुभयविलक्षणमेव वेदान्तवाक्यम् ॥ तच्च क्वचिदज्ञातज्ञापकत्वमात्रेण-विधिरिति व्यपदिश्यते, विधिपदरहितप्रमाणवाक्यत्वेन च क्वचिद्भूतार्थवाद इति व्यवह्रियत इति न दोषः । **तदेवं निरूपितं त्रिविधं ब्राह्मणम्** ।

एवं च कर्मकाण्डब्रह्मकाण्डात्मको वेदो धर्मार्थकाममोक्षहेतुः । स च प्रयोगत्रयेण यज्ञनिर्वाहार्थमृग्यजुःसामभेदेन भिन्नः।तत्र हौत्रप्रयोग ऋग्वेदेन, आध्वर्यप्रयोगो यजुर्वेदेन, औद्गात्रप्रयोगः सामवेदेन ॥ ब्राह्मयाजमानप्रयोगौ त्वत्रैवान्तर्भूतौ।**अथर्ववेदस्तु**-यज्ञानुपयुक्तः शान्तिकपौष्टिकाभिचारिकादिकर्मप्रतिपादकत्वेनात्यन्तविलक्षण एव । एवं प्रवचनभेदात्प्रतिवेदं भिन्ना भूयस्यः शाखाः । एवं च कर्मकाण्डे व्यापारभेदेऽपि, सर्वासां वेदशाखानामेकरूपत्वमेव ब्रह्मकाण्ड इति **चतुर्णां वेदानां प्रयोजनभेदेन भेद उक्तः** ।

**अथाङ्गानामुच्यते** फलम्-तत्र **शिक्षायाः**-उदात्तानुदात्तस्वरित ह्रस्वदीर्घप्लुतादिविशिष्टस्वरव्यञ्जनात्मकवर्णोच्चारणविशेषज्ञानं प्रयोजनम्। तदभावे मन्त्राणामनर्थफलकत्वात्।तदुक्तम्-"मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह । स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधाद्"इति।तत्र सर्ववेदसाधारणी **शिक्षा**-" अथ शिक्षां प्रवक्ष्यामि"इत्यादिपञ्चखण्डात्मिका **पाणिनिशिष्येण** केनचित्प्र**काशिता** । प्रतिवेदशाखं च भिन्नरूपाः-**प्रातिशाख्य**संज्ञिता अन्यैरेव मुनिभिः प्रदर्शिताः । **एवं** वैदिकपदसाधुत्वज्ञानेनोहादिकं व्याकरणस्य प्रयोजनम् । **तच्च**"वृद्धिरादैज् " [ १ । १ । १ । ] इत्याद्य-

ध्यायाष्टकात्मकं महेश्वरप्रसादेन भगवता पाणिनिनैव प्रकाशितम् ॥—॥ तत्र **कात्यायनेन** मुनिना पाणिनीयसूत्रेषु--**वार्तिकं** **विरचितम्** ॥—॥ तद्वार्तिकोपरि च भगवता **पतञ्जलिना** **महाभाष्यमारचितम्** । तदेतत्त्रिमुनि व्याकरणं वेदाङ्गं माहेश्वरमित्याख्यायते। कौमारादिव्याकरणानि तु--**न वेदाङ्गानि** । किं तु लौकिकप्रयोगमात्रज्ञानार्थानीत्यवगन्तव्यम् ।

**एवं** शिक्षाव्याकरणाभ्यां वर्णोच्चारणे पदसाधुत्वे च ज्ञाते वैदिकमन्त्रपदानामर्थज्ञानाकाङ्क्षायां तदर्थं भगवता **यास्केन** "समाम्नायः समाम्नातः स व्याख्यातव्यः" इत्यादि त्रयोदशाध्यायात्मकं—**निरुक्तं**—रचितम् । तत्र च नामाख्यातनिपातोपसर्गभेदेन **चतुर्विधं पदजातं** निरूप्य वैदिकमन्त्रपदानामर्थः प्रदर्शितः । मन्त्राणां चानुष्ठेयार्थप्रकाशनद्वारेणैव करणत्वात्पदार्थज्ञानाधीनत्वाच्च वाक्यार्थज्ञानस्य मन्त्रस्थपदार्थज्ञानाय निरुक्तमवश्यमपेक्षितम् । अन्यथाऽनुष्ठानासंभवात् । "सृण्येव जर्भरी तुर्फरीतू न " इत्यादीनामतिदुरूहाणां प्रकारान्तरेणार्थज्ञानस्यासंभावनीयत्वाच्च । एवं **निघण्टवोपि**— वैदिकद्रव्यदेवतात्मकपदार्थपर्यायशब्दात्मका निरुक्तान्तर्भूता एव ॥—॥ तत्रापि **निघण्टुसञ्ज्ञकः**— पञ्चाध्यायात्मको ग्रन्थो भगवता **यास्केनैव** कृतः ॥—॥ **एवमृङ्मन्त्राणां** पादबद्धच्छन्दोविशेषविशिष्टत्वात्तदज्ञाने च निन्दाश्रवणाच्छन्दोविशेषनिमित्तानुष्ठानविशेषविधानाच्च च्छन्दोज्ञानाकाङ्क्षायां तत्प्रकाशनाय" धीश्रीस्त्रीम्"इत्याद्यष्टाध्यायात्मिका-"**छन्दोविवृतिर्भ** गवता **पिङ्गलेन** विरचिता।तत्र"अथाऽलौकिकम्" इत्यन्तेनाध्यायत्रयेण गायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगतीति सप्त च्छन्दांसि सर्वाणि सावान्तरभेदानि प्रसङ्गान्निरूपितानि ॥ "अथ लौकिकम्"—इत्यारभ्याध्यायपञ्चकेन पुराणेतिहासादावुपयोगीनि लौकिकानि च्छन्दांसि निरूपितानि । व्याकरणे लौकिकपदनिरूपणवत् ॥--॥ **एवं** वैदिककर्माङ्गदर्शादिकालज्ञानाय--**ज्योतिषं** भगवता**दित्येन** **गर्गादिभिश्च** बहुविधं प्रणीतम् ॥--॥**एवं** शाखान्तरीयगुणोपसंहारेण वैदिकानुष्ठानक्रम-

विशेषज्ञानाय--**कल्पसूत्राणि** । तानि च प्रयोगत्रयभेदात्त्रिविधानि।तत्र **हौत्र**प्रयोगप्रतिपादकानि-आश्वलायनसांख्यायनादिप्रणीतानि। **आध्वर्यव**प्रयोगप्रतिपादकानि–बोधायनापस्तम्बकात्यायनादिप्रणीतानि।**औद्गात्र**प्रयोगप्रतिपादकानि तु–लाट्यायनद्राह्यायणादिभिः प्रणीतानि ॥ **एवं निरूपितः षण्णामङ्गानां प्रयोजनभेदः ।**

" **अथ चतुर्णामुपाङ्गानामधुनोच्यन्ते**–तत्र सर्गप्रतिसर्गवंशमन्वन्तरवंशानुचरितप्रतिपादकानि भगवता बादरायणेन कृतानि **पुराणानि** । तानि च–ब्राह्मं पाद्मं वैष्णवं शैवं भागवतं नारदीयं मार्कण्डेययमाग्नेयं भविष्यं ब्रह्मवैवर्तं लैङ्गं वाराहं स्कान्दं वामनं कौर्मं मात्स्यं गारुडं ब्रह्माण्डं चेति--**अष्टादश** ॥ एव**मुपपुराणा**न्यप्यनेकप्रकाराणि द्रष्टव्यानि ।

"**न्यायः**--आन्वीक्षिकी पञ्चाध्यायी **गौतमेन** प्रणीता। प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानाख्यानां षोडशपदार्थानामुद्देशलक्षणपरीक्षाभिस्तत्त्वज्ञानं तत्प्रयोजनम् ।

**एवं** दशाध्यायं **वैशेषिकशास्त्रं कणादेन** प्रणीतम्।द्रव्यगुणकर्मसामान्यविशेषसमवायानां षण्णां भावपदार्थानामभावसप्तमानां साधर्म्यवैधर्म्याभ्यां व्युत्पादनं तस्य प्रयोजनम् । एतदपि न्यायपदेनोक्तम् ।

"**एवं मीमांसापि द्विविधा**--कर्ममीमांसा, शारीरकमीमांसा च । तत्र द्वादशाध्यायी **कर्ममीमांसा**–" अथातो धर्मजिज्ञासा " [ १ । १ । १ ।] इत्यादिः " अन्वाहार्ये च दर्शनद् " [ १२ । ४ । ४७ ] इत्यन्ता भगवता **जैमिनिना** प्रणीता ।तत्र ( १ )–धर्मप्रकरणं ( २ )–धर्मभेदाभेदौ ( ३ )-शेषशेषिभावः ( ४ )– क्रत्वर्थपुरुषार्थभेदेन प्रयुक्तिविशेषः( ५ )–श्रुत्यर्थपाठनादिक्रमभेदः ( ६ )–अधिकारविशेषः ( ७ )–सामान्यातिदेशः ( ८ )–विशेषातिदेशः ( ९ )–ऊहः ( १० )-बाधः ( ११ )–तन्त्रं ( १२ )–प्रसङ्गश्चेति क्रमेण द्वादशानामध्यायानामर्थाः ॥–॥ तथा **सङ्कर्षणकाण्डमपि**–अध्याय-

चतुष्टयात्मकं **जैमिनिना** प्रणीतम् । तच्च **देवताकाण्डसंज्ञया** प्रसिद्धमप्युपासनाख्यकर्मप्रतिपादकत्वात्कर्ममीमांसान्तर्गतमेव ॥–॥ **तथा–चतुरध्यायी शारीरकमीमांसा**–"अथातो ब्रह्मजिज्ञासा" [ १ । १ ।१।] इत्यादिः "अनावृत्तिः शब्दादनावृत्तिश्शब्दात्" [४।४ । २२ । ] इत्यन्ता जीवब्रह्मैक्यसाक्षात्कारहेतुः श्रवणाख्यप्रतिपादकन्यायानुपदर्शयन्ती भगवता **बादरायणेन** विरचिता । (१ )–तत्र सर्वेषामपि वेदान्तवाक्यानां साक्षात्परम्परया वा प्रत्यगभिन्नाद्वितीये ब्रह्मणि तात्पर्यमिति समन्वयः **प्रथमाध्यायेन** प्रदर्शितः। तत्र च **प्रथमे पादे**–स्पष्टब्रह्मलिङ्गयुक्तानि वाक्यानि विचारितानि । **द्वितीयपादे तु**–अस्पष्टब्रह्मलिङ्गयुक्तान्युपास्यब्रह्मविषयाणि ॥ **तृतीयपादे**–स्पष्टब्रह्मलिङ्गयुक्तानि प्रायशो ज्ञेयब्रह्मविषयाणि ॥ एवं पादत्रयेण वाक्यविचारः समापितः ॥ **चतुर्थपादे तु**–प्रधानविषयत्वेन संदिह्यमानान्यव्यक्ताजादिपदानि चिन्तितानि॥–॥(२)–**एवं** वेदान्तानामद्वये ब्रह्मणि सिद्धे समन्वये तत्र संभावितस्मृतितर्कादिविरोधमाशङ्क्य तत्परिहारः क्रियत इत्यविरोधो **द्वितीयाध्यायेन** दर्शितः । तत्राद्य **पादे**–साङ्ख्ययोगकाणादादिस्मृतिभिः साङ्ख्यादिप्रयुक्तैस्तर्कैश्च विरोधो वेदान्तसमन्वयस्य परिहृतः । **द्वितीये पादे**–साङ्ख्यादिमतानां दुष्टत्वं प्रतिपादितम् । स्वपक्षस्थापनपरपक्षनिराकरणरूपपक्षद्वयात्मकत्वाद्विचारस्य॥ **तृतीये पादे**–महाभूतसृष्ट्यादिश्रुतीनां परस्परविरोधः **पूर्वभागेन**–परिहृतः । **उत्तरभागेन** तु–जीवविषयाणाम् । **चतुर्थपादे**–इन्द्रियविषयश्रुतीनां विरोधपरिहारः ॥–॥ ( ३ ) **तृतीयाध्याये**–साधननिरूपणम्। तत्र **प्रथमपादे**–जीवस्य परलोकगमनेन वैराग्यं निरूपितम्। **द्वितीयपादे–पूर्वभागेन**–त्वम्पदार्थः शोधितः। **उत्तरभागेन**–तत्पदार्थः । **तृतीयपादे**–निर्गुणे ब्रह्मणि नानाशाखापठितः पुनरुक्तपदोपसंहारः कृतः । प्रसङ्गाच्च सगुणविद्यासु शाखान्तरीयगुणोपसंहारानुपसंहारौ निरूपितौ । **चतुर्थपादे**–निर्गुणब्रह्मविद्याया बहिरङ्गसाधनान्याश्रमयज्ञादीनि, अन्तरङ्गसाधनानि

शमदमनिदिध्यासनादीनि च,–निरूपितानि ॥–॥ ( ४ )–**चतुर्थे**ऽध्याये–सगुणनिर्गुणविद्ययोः फलविशेषनिर्णयः कृतः। तत्र **प्रथमपादे**--श्रवणाद्यावृत्त्या निर्गुणं ब्रह्म, उपासनावृत्त्या सगुणं वा ब्रह्म,--साक्षात्कृत्य जीवतः पापपुण्यालेपलक्षणा जीवन्मुक्तिरभिहिता। **द्वितीये पादे**-म्रियमाणस्योत्क्रान्तिप्रकारश्चिन्तितः। **तृतीयपादे**--सगुणब्रह्मविदो मृतस्योत्तरमार्गोऽभिहितः। **चतुर्थपादे**--**पूर्वभागेन**--निर्गुणब्रह्मविदो विदेहकैवल्यप्राप्तिरुक्ता। **उत्तरभागेन**--सगुणब्रह्मविदो ब्रह्मलोके स्थितिरुक्तेति ॥--॥ इदमेव **सर्वशास्त्राणां मूर्धन्यम्**। शास्त्रान्तरं सर्वमस्यैव शेषभूतमितीदमेव मुमुक्षुभिरादरणीयमिति रहस्यम्।

"एवं--**धर्मशास्त्राणि**-**मनुयाज्ञ**वल्क्ययमाङ्गिरोवसिष्ठदक्षसंवर्त्तशातातपपराशरगौतमशङ्खलिखितहारी(रि)तापस्तम्बोशनोव्यासकात्यायनबृहस्पतिदेवलनारदपैठीनसिप्रभृतिभिः कृतानि वर्णाश्रमधर्मविशेषाणां विभागेन प्रतिपादकानि ॥--॥ एवं **व्यास**कृतं--**महाभारतं**, वाल्मीकिकृतं च–**रामायणं**--धर्मशास्त्र एवान्तर्भूतं स्वयमितिहासत्वेन प्रसिद्धम्। साङ्ख्यादीनां धर्मशास्त्रान्तर्भावेऽपीह स्वशब्देनैव निर्देशात्पृथगेव संगतिर्वाच्या।

"अथ वेदचतुष्टयस्य क्रमेण चत्वार **उपवेदा** निरूप्यन्ते–तत्रा**युर्वेदस्याष्टौ** स्थानानि भवन्ति-( १ )--सूत्रं ( २ )--शारीरम् ( ३ )--ऐन्द्रियं ( ४ )--चिकित्सा ( ५ )--निदानं ( ६ )--विधानं ( ७ )--कल्पः (८)–सिद्धिश्चेति। स च ब्रह्मप्रजापत्यश्विधन्वन्तरीन्द्रभरद्वाजात्रेयाग्निवेश्यादिभिरुपदिष्ट**श्चरकेण** संक्षिप्तः ॥ तत्रैव सुश्रुतेन पञ्चस्थानात्मकं **प्रस्थानान्तरं** कृतम् ॥ **एव** वाग्भट्टादिभिरपि बहुधाति न शास्त्रभेदः ॥-॥ **कामशास्त्रमपि**– आयुर्वेदान्तर्गतमेव। **सुश्रुतेन** वाजीकरणाख्यकामशास्त्राभिधानात्। तत्र **वात्स्यायनेन** पञ्चाध्याय्यात्मकं–**कामशास्त्रं** प्रणीतम्। तस्य च विषयवैराग्यमेव प्रयोजनम्। शास्त्रोदितमार्गेणापि विषयभोगे दुःखमात्रपर्यवसानात्।

**चिकित्साशास्त्रस्य**—रोगतन्निदानरोगनिवृत्तितत्साधनज्ञानं प्रयोजनम्॥--॥एवं **धनुर्वेदः**--पादचतुष्टयात्मको **विश्वामित्र**प्रकाशितः। तत्र **प्रथमः**--दीक्षापादः, **द्वितीयः**--संग्रहपादः, **तृतीयः**--सिद्धिपादः, **चतुर्थः**--प्रयोगपादः ॥ तत्र **प्रथमपादे**--धनुर्लक्षणमधिकारिनिरूपणं च कृतम् । तत्र **धनुःशब्द**श्चापे रूढोऽपि चतुर्विधायुधवाची वर्तते । तच्च **चातुर्विध्यं**—मुक्तममुक्तं, मुक्तामुक्तं, यन्त्रमुक्तं च । तत्र **मुक्तं**--चक्रादि । **अमुक्तं**--खड्गादि । **मुक्तामुक्तं**--शल्यावान्तरभेदादि । **यन्त्रमुक्तं**--शरादि । तत्र मुक्तम्--"**अस्त्रम्**" इत्युच्यते ॥ अमुक्तं--"**शस्त्रम्**" इति । तदपि ब्राह्मवैष्णवपाशुपतप्राजापत्याग्नेयादिभेदादनेकविधम् ॥ एवं साधिदैवतेषु समन्त्रेषु चतुर्विधायुधेषु **येषा**मधिकारः क्षत्रियकुमाराणां तदनुयायिनां च, **ते सर्वे चतुर्विधाः**—पदातिरथगजतुरङ्गारूढाः । दीक्षाभिषेकशकुनमङ्गलकरणादिकं सर्वमपि **प्रथमपादे**--निरूपितम् ॥ सर्वेषां शस्त्रविशेषाणामाचार्यस्य च लक्षणपूर्वकं संग्रहणप्रकारो दर्शितः--**द्वितीयपादे** ॥ गुरुसंप्रदायसिद्धानां शस्त्रविशेषाणां पुनःपुनरभ्यासो मन्त्रदेवतासिद्धिकरणमपि निरूपितं—**तृतीयपादे** ॥ एवं देवतार्चनाभ्यासादिभिः सिद्धानामस्त्रविशेषाणां प्रयोगश्च**तुर्थपादे**—निरूपितः ॥ क्षत्रियाणां स्वधर्माचरणं युद्धं दुष्टदस्युचौरादिभ्यः प्रजापालनं च धनुर्वेदप्रयोजनम् ॥–॥ **एवं गान्धर्ववेदशास्त्रं—भरतेन** प्रकाशितम् । तत्र नृत्यगीतवाद्यभेदेन बहुविधोऽर्थः प्रपञ्चितः ॥ देवताराधननिर्विकल्पकसमाध्यादिसिद्धिश्च गान्धर्ववेदस्य प्रयोजनम् ।

" एव**मर्थशास्त्रं** च बहुविधं—नीतिशास्त्रम्, अश्वशास्त्रं, गजशास्त्रं, शिल्पशास्त्रं, सूपशास्त्रं, चतुःषष्टिकलाशास्त्रं ( ? ), चेति ॥ **ताश्चतुःषष्टिः कलाः शैवागमे** उक्ताः--( १ )—"गीतम् । ( २ )—वाद्यम् ( ३ )—नृत्यम् । ( ४ )—नाट्यम् । (५)—आलेख्यम् । ( ६ )—विशेषकच्छेद्यम्।( ७ )--तण्डुलकुसुमबलिविकाराः । ( ८ )--पुष्पास्तरणम् ( ९ )--दशनवसनाङ्गरागः । ( १० )- मणिभूमिकाकर्म । ( ११ )–

शयनरचनम् । ( १२ )--उदकवाद्यम् । ( १३ )--उदकाघातः । ( १४ )--चित्रयोगाः । ( १५ )--माल्यग्रथनविकल्पाः । ( १५ )--शेखरापीडयोजनम् । ( १६ )--नेपथ्ययोगाः । ( १७ ) कर्णपत्रभङ्गाः । ( १९ )--गन्धयुक्तिः । ( २० )--भूषणयोजनम् । ( २१ )--ऐन्द्रजालानि । ( २२ )--कौचुमारयोगाः । ( २३ )--हस्तलाघवम् । ( २४ )--विचित्रशाकयूषभक्ष्यविकारक्रियाः । ( २५ )--पानकरसरागासवयोजनम् । ( २६ )--सूचीवायकर्म । ( २७ )--सूत्रक्रीडा । ( २८ )--वीणाडमरुकवाद्यानि । ( २८ )--प्रहेलिका । ( २९ )--प्रतिमाला । ( ३० )--दुर्वाचकयोगाः । ( ३२ )--पुस्तकवाचनम् । ( ३३ )--नाटकाख्यायिकादर्शनम् । ( ३४ )--काव्यसमस्यापूरणम् । ( ३५ )--पट्टिकावेत्रवानविकल्पाः । ( ३६ )--तर्कुकर्माणि । ( ३७ )--वास्तुविद्या । ( ३८ )--रूपरत्नपरीक्षा । ( ३९ )--रूप्यरत्नपरीक्षा । ( ४० )--धातुवादः । ( ४१ )--मणिरागज्ञानम् । ( ४२ )--आकारज्ञानम् ( ४३ )--वृक्षायुर्वेदयोगाः । ( ४४ )--मेषकुक्कुटलावकयुद्धविधिः । ( ४५ )--शुकसारिकाप्रलापनम् । ( ४६ )-उत्सादनम् । ( ४७ )--केशमार्जनकौशलम् । ( ४८ )--अक्षरमुष्टिकाकथनम् । ( ४९ )--म्लेच्छितकविकल्पाः । ( ५० )--देशभाषाज्ञानम् । ( ५१ )--पुष्पशकटिकानिर्मितिज्ञानम् । ( ५२ )--यन्त्रमातृकाधारणमातृकासंवाच्यम् । ( ५३ )--मानसकाव्यक्रियाविकल्पाः । ( ५४ )-अभिधानकोशः । ( ५५ )--छन्दोज्ञानम् । ( ५६ )--क्रियाविकल्पाः । ( ५७ )-छलितकयोगाः । ( ५८ )-वस्त्रगोपनानि । ( ५९ )-द्यूतविशेषः । ( ५९ )-आकर्षक्रीडा । ( ६१ )-बालक्रीडनकानि । ( ६२ )--वैनयिकविद्याज्ञानम् । ( ६३ )--वैजयिकविद्याज्ञानम् । ( ६३ )--वैतालिकविद्याज्ञानम् " इति । एतत्सर्वं **नानामुनिभिः** प्रकाशितम् । तस्य सर्वस्य च लौकिकालौकिकतत्तत्प्रयोजनभेदो द्रष्टव्यः । एवमष्टादश विद्यास्त्रयीशब्देनोक्ताः ।

"**तथा–सांख्यशास्त्रं कपिलेन** भगवता प्रणीतम् । तच्च "त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः" इत्यादिषडध्यायम् । तत्र **प्रथमऽध्याये**

विषया निरूपिताः । **द्वितीये**–प्रधानकार्याणि । **तृतीये**–विषयवैराग्यम् । **चतुर्थे**–विरक्तानां पिङ्गलकुमारादीनामाख्यायिकाः । **पञ्चमे**-परपक्षनिर्जयः।**षष्ठे**–सर्वार्थसंक्षेपः। प्रकृतिपुरुषविवेकज्ञानं–**साङ्ख्यशास्त्रस्य प्रयोजनम् ॥–॥ तथा योगशास्त्रं**–भगवता **पतञ्जलिना** प्रणीतम् “ अथ योगानुशासनम् ” इत्यादि पादचतुष्टयात्मकम् । तत्र **प्रथमे पादे**–चित्तवृत्तिनिरोधात्मको योगाभ्यासो, वैराग्यरूपं तत्साधनं च,-निरूपितम्।**द्वितीये पादे**–विक्षिप्तचित्तस्यापि समाधिसिद्ध्यर्थं यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानि निरूपितानि । **तृतीये पादे**–योगविभूतयः । **चतुर्थे पादे**–कैवल्यमिति । तस्य च विजातीयप्रत्ययनिरोधद्वारेण निदिध्यासनसिद्धिः प्रयोजनम् ॥

“**तथा** पशुपतिमतं **पाशुपतशास्त्रं**--भगवता **पशुपतिना** पशुपाशविमोक्षणाय “ अथातः पाशुपतयोगविधिं व्याख्यास्यामः ”इत्यादिना **पञ्चाध्यायात्मकं** विरचितम् । तत्राध्यायपञ्चकेनापि कार्यरूपो जीवः–**पशुः**।कारणं–**पशुपतिरी**श्वरः । **योगः**–पशुपतौ चित्तसमाधनम् । **विधिः**-भस्मनाभिषवणस्नानादिर्निरूपितः । दुःखान्तसंज्ञको–मोक्षश्चास्य प्रयोजनम् । यत एव “ कार्यकारणयोगविधिदुः–खान्ताः ” इत्याख्यायन्ते ॥

“**एवं वैष्णवनारदादिभिः** कृतं– **पाञ्चरात्रम्** । तत्र वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धाश्चत्वारः–**पदार्था** निरूपिताः । तत्र भगवान्**वासुदेवः** परमेश्वरः सर्वकारणम् । तस्मादुत्पद्यते **सङ्कर्षणाख्यो**–जीवः। तस्मान्मनः–**प्रद्युम्नः** । तस्मा**दनिरुद्धो**ऽहङ्कारः । सर्वे चैते भगवतो वासुदेवस्यैवांशभूतास्तदभिन्ना एवेति, तस्य वासुदेवस्य मनोवाक्कायवृत्तिभिराराधनं कृत्वा कृतकृत्यो भवतीत्यादि च,--निरूपितम् । तदेवं दर्शितः प्रस्थानभेदः सर्वेषाम् ॥

“**संक्षेपेण त्रिविध** एव **प्रस्थानभेदः**।तत्र-**आरम्भवादः**-एकः। **परिणामवादः**-द्वितीयः। **विवर्तवादः**–तृतीयः।(१)–पार्थिवाप्यतै-

जसवायवीयाश्चतुर्विधाः परमाणवो द्व्यणुकादिक्रमेण ब्रह्माण्डपर्यन्तं जगदारभन्ते । असदेव कार्यं कारणव्यापारादुत्पद्यत इति **प्रथमः पक्षः--तार्किकाणां जैमिनीयानां च** ॥ (२) सत्त्वरजस्तमोगुणात्मकप्रधानमेव महदहङ्कारादिक्रमेण जगदाकारेण परिणमते । आविर्भावात्पूर्वमपि सूक्ष्मरूपेण सदेव कार्यं कारणव्यापारेणाभिव्यज्यत इति **द्वितीयः पक्षः-साङ्ख्ययोगपाशुपतानाम्**॥ ब्रह्मणः परिणामो जगदिति--**वैष्णवाः** । स्वप्रकाशपरमानन्दाद्वितीयं ब्रह्म स्वमायावशान्मिथ्यैव जगदाकारेण कल्प्यत इति **तृतीयः पक्षः-मायाशबलब्रह्मवादिनाम्** ॥ सर्वेषां च प्रस्थानकर्तॄणां मुनीनामद्वितीये परमेश्वर एव वेदान्तप्रतिपाद्ये तात्पर्यम् ॥ न हि ते मुनयो भ्रान्ताः । सर्वज्ञत्वात्तेषाम् । किं तु बहिर्विषयप्रवणानामापाततः परमपुरुषार्थे प्रवेशो न भवतीति नास्तिक्यनिवारणाय तैः प्रकारभेदाः प्रदर्शिताः" इति ॥ तत्र ऋग्वेदो यजुर्वेदः सामवेद इत्यारभ्यैतावत्पर्यन्तं मधुसूदनाचार्यैः प्रस्थानचन्द्रिकादावेतावान्वेदादिविद्यानां गीतादिकलानां च प्रमेयभागः संक्षेपेण निरूपितः ॥

## चित्सुखाचार्योक्त्यनुवादः-

अथ चित्सुखाचार्यैर्व्यवस्थापितं वेदप्रामाण्यमुच्यते । **तथा हि-** "**ननु** कथमपौरुषेयत्वं वेदानाम् । तत्प्रतिपादकप्रमाणाभावात् ॥-॥ **नन्वपौरुषेया** वेदाः, सम्प्रदायाविच्छेदे सत्यस्मर्यमाणकर्तृकत्वादात्मवदित्यनुमानमस्तीति **चेत्** । **मैवम्** ॥ विशेषणासिद्धेः । पौरुषेयवेदवादिभिः प्रलये सम्प्रदायविच्छेदस्याभ्युपगमात् ॥ अस्मर्यमाणकर्तृकत्वं च **किमप्रमीयमाणकर्तृकत्वं** विवक्षितम्--**उत** स्मरणागोचरकर्तृकत्वम् । **नाद्यः** । " तस्माद्यज्ञात्सर्वहुतः । ऋचः सामानि जज्ञिरे छन्दांसि जज्ञिरे तस्मात् । यजुस्तस्मादजायत " " त्रयो वेदा अजायन्त ऋग्वेद एवाग्नेरजायत यजुर्वेदो वायोः । सामवेद आदित्यात् " । "इदं सर्वमसृजत । ऋचो यजूंषि सामानि" इत्यादिश्रुतिभिः **कर्तुः** प्रमीयमाणत्वात् । **नापि द्वितीयः** । विकल्पासहत्वात् । **तथा**

हि—किमेकेनास्मरणं विवक्षितम्—उत—सर्वास्मरणम् । **नाद्यः ।** मुक्तकश्लोकादावनैकान्तिकत्वात् । **न द्वितीयः ।** सर्वास्मरणस्यासर्वज्ञविज्ञानाविषयत्वात् ॥—॥ **ननु** "वाचा विरूपनित्यया" "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदाꣳश्च प्रहिणोति तस्मै" । "नाचिकेतमुपाख्यानं मृत्युप्रोक्तꣳसनातनम्" । "अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा" इत्यादिश्रुतिस्मृतिवाक्येभ्यो वेदस्य नित्यत्वावगमात् । पौरुषेयत्वप्रतिपादकानि कल्पादौ तत्सम्प्रदायप्रवर्त्तकत्वपराणीति **चेत् ॥ मैवम् ॥** "वाचा विरूपनित्यया" इत्यस्य "वृष्णे चोदस्व सुष्टुतिम्" इति वाक्यशेषादग्न इति विधिपरत्वावगमात् । अन्यार्थदर्शनस्य प्राप्त्यभावे प्रमाणत्वानुपपत्तेः । "यो वै वेदाꣳश्च प्रहिणोति" इत्यस्य च पौरुषेयत्वापौरुषेयत्वयोः साधारणत्वात्स्वयं निर्मायापि वेदानां प्रदानसंभवात् । "मृत्युप्रोक्तꣳसनातनम्" इत्यस्य वाक्यस्य "उक्त्वा श्रुत्वा च मेधावी ब्रह्मलोके महीयते" इति वाक्यादुपाख्यानानुवचनश्रवणप्रशंसापरत्वात् । "अनादिनिधना नित्या" इति स्मृतेश्च ॥ "प्रतिमन्वन्तरं चैषा श्रुतिरन्या विधीयते" इति स्मृत्यन्तरविरोधेनानिर्णायकत्वात् ॥ एवं च नित्यत्वप्रतिपादकानामन्यार्थतया पौरुषेयप्रतिपादकवाक्याबाधकत्वात्पौरुषेयत्वमेव वेदानां निश्चिनुमः ॥—॥ **अनुमानतोऽपि** तथात्वमध्यवस्यामः-–वेदवाक्यानि, पौरुषयाणि, वाक्यत्वात्, कालिदासादिवाक्यवदिति, वेदवाक्यानि, आप्तप्रणीतानि, प्रमाणत्वे सति वाक्यत्वात्, मन्वादिवाक्यवदिति ॥—॥ **ननु** वेदस्याध्ययनं सर्वं, गुर्वध्ययनपूर्वकं, वेदाध्ययनत्वाद्, अधुनाध्ययनं यथेत्यनुमानात्सत्प्रतिपक्षसाधनतेति **चेत् ॥ मैवम् ॥** सर्ववेदाध्ययन पक्षीकारे दृष्टान्तासिद्धेः । अतीतकालिकाध्ययनपक्षीकारे चांशतः सिद्धसाधनत्वात् । सर्गकालिकाध्ययनपक्षीकारे सर्गमनङ्गीकुर्वतो मीमांसकस्याश्रयासिद्धेः । भारताध्ययनं सर्वं, गुर्वध्ययनपूर्वकं, भारताध्ययनत्वेन साम्प्रताध्ययनं यथेत्याभाससमानयोगक्षेमत्वात् । **अथ** तत्र कर्त्तृस्मृत्या बाधः—"कृष्णद्वैपायनं व्यासं विद्धि नारायणं प्रभुम् ।

को ह्यन्यः पुण्डरीकाक्षान्महाभारतकृद्भवेद् " इत्युक्तेः । **तर्हि**-इहापि सकर्तृकताप्रतिपादकश्रुतिभिर्बाध इति समानम् । विपक्षे चाप्ताप्रणीतत्वाद्बालोन्मत्तादिवदप्रामाण्यप्रसङ्गो बाधकस्तर्कः । **अथ** बालोन्मत्तादिवाक्यानामनाप्तप्रणीतत्वेनाप्रामाण्यम् । इह तदभावादाप्तवाक्यवत्प्रामाण्यमुपपद्यत इति चेत् ॥ **मैवम्** ॥ अनाप्तप्रणीतवाक्यस्य जगत्याप्तप्रणीतत्वनियमदृष्टेरन्यथा वक्तुरभावे वाक्यस्योत्पत्तिप्रतीत्योरसंभवात् ॥–॥ **अथाभिव्यक्तिरेव** शब्दानां वक्तृव्यापारान्नोत्पत्तिः ॥ **मैवम्** ॥ एवं सति पाखण्डाद्यागमानामपि नित्यत्वप्रसङ्गात् ॥–॥ **किं च**--शब्दः,–नित्यः, कृतको वा, सामान्यवत्त्वे सति अस्मदादिबाह्येन्द्रियप्रत्यक्षत्वाद्, घटवदित्यनुमानेन शब्दानां कृतकत्वेन पौरुषेयत्वसिद्धेः ॥ **न च** मीमांसकप्रतियोगिव्यवच्छेदार्थमस्मदादिपदं व्यर्थम् । तेन योगिनामनभ्युपगमादिति **वाच्यम्** ॥ स्वमते व्यभिचारनिवारणार्थत्वात् । तथा च चिरन्तनाचार्याणामपि स्वमते व्यभिचारनिवारणार्थं विशेषणोपादानं दृश्यते । नित्यः, शब्दः, ध्वनिधर्मान्यत्वे सति श्रावणत्वाच्छब्दत्ववदिति । **न हि** वर्णनित्यत्ववादिमते वर्णातिरिक्ता ध्वनय उदात्तादयो वा तद्धर्माः सन्ति । ये व्यावर्त्तेरन् । स्वमते तु ध्वनेस्तद्धर्माणां चोदात्तत्वादीनां सद्भावादुपपद्यते ध्वनिधर्मान्यत्वे सतीति विशेषणम् ॥ **न चोपान्त्या**-दिशब्देषु भागासिद्धिः । श्रोत्रग्राह्यशब्दविशेषस्यैव पक्षीकरणात् ॥ **न चैवमपि** विशिष्टधर्मिहेत्वोरसिद्धिस्तत्तच्छ्रोत्रेष्वेकस्यैव शब्दस्य सम्भवायानङ्गीकारादेकस्य शब्दस्य बहूनां प्रत्यक्षत्वानुपपत्तेरिति **वाच्यम्** । शब्दनित्यत्वानुमानेऽप्यस्य दोषस्य तुल्यतया स्वव्याघातकत्वेन जात्युत्तरत्वापत्तेः । **तथा हि**–भवदिन्द्रियग्राह्यः शब्दः पक्षः, अस्मदिन्द्रियग्राह्यो वा । **नाद्यः** । प्रतिवादिनं प्रत्यसिद्धेः । **न द्वितीयः** । वादिनं प्रत्यसिद्धेः । तस्माल्लोकप्रसिद्धशब्दत्वजात्याधार एव शब्दो नित्यत्वसाधने पक्ष इति वाच्यम् । **एवमनित्यत्वसाधने**-ऽपीति न कश्चिद्दोषः ॥ **न च** स एवायं गकार इति प्रत्यभिज्ञा-

प्रत्यक्षविरोधात्कालात्ययापदिष्टमनित्यत्वानुमानम् । प्रत्यभिज्ञाया जातिविषयत्वेन, व्यक्तिविषयत्वेन च,-संदिह्यमानाया बाधकतानुपपत्तेः॥-॥ **ननु** विवादाध्यासितः कालः, वेदाध्ययनयुक्तः, कालत्वात्, सम्प्रतिपन्नकालवदिति प्रत्यक्षानुमानविरोध इति **चेत् ॥ मैवम् ॥** विकल्पासहत्वात्। **तथा हि-किं** वेदप्रणयनात्प्राक्कालः, **किं वा**-तदुत्पादोत्तरकालः, **उत** सर्गकालः,-पक्षीक्रियते । पक्षत्रयेऽपि मीमांसकस्य धर्म्यसिद्धिः । **प्रथमे च** प्रतिज्ञापदयोर्व्याघातोऽतिरिच्यते । कालिदासादिवाक्यपाठेऽप्येवमनुमानोत्थानादाभाससमानयोगक्षेमता चानुमानस्य।"**नन्वशरीरस्येश्वरस्य** तात्वादिविवृत्तिरूपवर्णोच्चारणासम्भवात्कथं तत्प्रणीतत्वं वेदस्येति **चेत् ॥ मैवम् ॥** स्वभावतोऽशरीरस्यापि परमेश्वरस्य भक्तानुग्रहार्थं लीलाविग्रहग्रहणोपपत्तेः । तदेवं वेदपौरुषेयतानुमानस्य निरस्तसमस्तदूषणतया वेदाः पौरुषेया इति प्राप्तम् ।

**अत्र समाधिः**। "श्रुतीनामीश्वराज्जन्म केवलं श्रुतिषु श्रुतम् । मानान्तरोपलब्धेऽर्थे रचना तु न मीयते" इति ॥ **किमिदं पौरुषेयत्वं नाम**-यत्र श्रुतयः स्मृतयश्च प्रमाणत्वेनोदाहृताः। **किं** पुरुषाधीनोत्पत्तिमत्त्वं-वेदानां **पौरुषेयत्वम्,-उत**-प्रमाणान्तरेणार्थमुपलभ्य विरचितत्वम् । तत्राद्योऽङ्गीक्रियते । आकाशवन्नित्यत्वेन सर्वगतत्वेन कालतो देशतश्च क्रमशून्यानां वर्णानामनित्योच्चारणप्रतिपत्तिक्रमविशिष्टानां पूर्वपूर्वक्रमानुस्मृतिनिमित्ततत्सदृशोत्तरक्रमवतां वेदशब्दवाच्यानां सांप्रतमपि पुरुषाधीनोत्पत्तिमत्तया सर्गसमयेऽपि श्रुत्या तथात्वस्य प्रतिपादयितुमुचितत्वात् । **द्वितीयस्तु न** । प्रमाणान्तरेणार्थमुपलभ्य तत्रेश्वरेण वेदा विरचिता इति श्रुतिभिरप्रतिपादितत्वात् । **न च** पुरुषाधीनोत्पत्तिमत्त्वश्रवणान्यथानुपपत्त्यैव प्रमाणान्तरेणार्थमुपलभ्य विरचितत्वं सिद्ध्येत् । इदानीमस्मदादिभिरुच्चार्यमाणवेदवाक्येषु, मालतीमाधवादिवाक्येषु च,-व्यभिचारात् ॥-॥ **एतेन** प्रमाणभूतवाक्यस्य रचनान्यथानुपपत्त्या मानान्तरोपलब्धेऽर्थे विरचितत्वकल्पनापि **प्रत्युक्ता** । अस्मदादिभिरुच्चार्यमाणमन्वादिवान्वाक्येषु

व्यभिचारात् ॥–॥ **यदि** विरचितत्वान्यथानुपपत्तिर्मानान्तरोपलब्धेऽर्थे रचनां कल्पयेत् ॥ **हन्तैवम्** । " ऋग्वेद एवाग्नेरजायत । यजुर्वेदो वायोः।सामवेद आदित्याद् " इति वेदानामग्न्यादिभ्यो जन्मश्रवणात्तत्तत्कर्तृकतयेश्वरकर्तृकत्वनियमो न स्यात् ॥–॥ **अथ** "तस्माद्यज्ञात्सर्वहुतः । ऋचः सामानि जज्ञिरे " इत्यादिवाक्ये वेदानामीश्वरकर्तृकत्वाधिगमादधिष्ठातृदेवतापरं तत्तद्वाक्यमिति कल्प्येत, **तर्हि** "ब्रह्म स्वयम्भु" " वाचा विरूपनित्यया" "अनादिनिधना नित्या वागुत्सृष्टा" इत्यादिश्रुतिस्मृतिशतेभ्योऽपि वेदानां नित्यत्वावगमात् । "तस्माद्यज्ञाद्" इत्यादिवाक्यं सम्प्रदायप्रवर्त्तकत्वपरमिति कल्पना न प्रकृतेऽपि दण्डवारिता॥-॥**नन्वेषामन्यपरत्वान्नैतेभ्यो** नित्यत्वसिद्धिरिति **चेत्** ॥ **मैवम्** ॥ देवताधिकरणन्यायेन प्रमाणान्तरप्राप्तिविरोधयोरसतोरन्यपराणामपि स्वार्थे प्रामाण्योपपत्तेः ॥–॥ **एतेन** वाक्यत्वादिति पौरुषेयत्वानुमानमपि **परास्तम्** ॥ पुरुषप्रणीतत्वमात्रसाध्ये सिद्धसाधनत्वात् ॥ प्रमाणान्तरेणार्थमुपलभ्य विरचितत्वसाधने च मालतीमाधवादिनैकान्तिकत्वात् ॥ तथाच प्रमाणत्वे सति वाक्यत्वादाप्तप्रणीतत्वानुमानेऽपि सिद्धसाधनता । आप्तेनोच्चार्यमाणतया तत्प्रणीतत्वस्यापौरुषेयत्ववादिभिरप्यभ्युपगमात् । प्रमाणान्तरेणार्थमुपलभ्य विरचितत्वानुमाने तु हेतोरन्यथासिद्धिः । अस्मदादिभिरुच्चार्यमाणेदानीन्तनवेदवाक्यानामिव सर्गकालिकानामपि तेषामीश्वरेणोच्चार्यमाणत्वमात्रेणापि प्रमाणवाक्यत्वोपपत्तौ प्रमाणान्तराधिगतिपूर्वकविरचितत्वस्यानुमातुमशक्यत्वात् । तस्य च सर्वज्ञत्वादतीतकल्पान्तरगतवेदापरोक्षसंभवात् । अविग्रहस्यापि तस्य भक्तानुकम्पितया लीलाविग्रहग्रहणेन तदुच्चारणोपपत्तेश्च ॥–॥ **एतेन** सर्गकालिकाध्ययनस्य पूर्वपूर्ववेदाध्ययनपुरःसरत्वमपि **समर्थनीयम्** । **न** **चाश्रयासिद्धिः** । वेदान्तिभिः सर्गाङ्गीकारात् । **न च** भारताध्ययनस्य तथात्वप्रसङ्गेनाभाससमानयोगक्षेमता ॥ तत्र दृढतरकर्त्तृस्मरणेन बाधात् । **न चे**हापि कर्तृश्रुत्या बाधः । तस्याः सम्प्रदायप्रवर्त्तकत्वपरतयाप्युपपत्तेः । अन्यथा नित्यत्वप्रतिपादकवाक्यनामनवकाशत्वप्रसङ्गात् । भारतस्य नित्यत्वप्रतिपादकप्रमाणाभावाच्च ॥ **न च** वेदानामनाप्तप्रणीतत्वादाप्तप्रणीतत्वमनुमातुं युक्तम् । आत्माकाशादौ व्यभिचारात् ॥–॥ **अथ**

शब्दत्वे सतीति विशेषणाददोषः॥नैवम् । आप्तप्रणीततामात्रस्य पूर्वोक्तन्यायेन वेदेप्यङ्गीकारात् । न चैवं सति पाषण्डाद्यागमानामपौरुषेयत्वम् । मानान्तरेणार्थमुपलभ्य तत्तत्पुरुषविरचितत्वस्य सौगतादिभिः स्वयमेवाङ्गीकारात्प्रसिद्धेश्च । न च सामान्यत्वे सत्यस्मदादिबहिरिन्द्रियप्रत्यक्षतया वर्णानां कृतकत्वानुमानात् ॥ अस्मदादिबहिरिन्द्रियप्रत्यक्षस्य कालाकाशादेर्नित्यत्वेन भाट्टं प्रत्यनैकान्त्यात् सत्प्रतिपक्षत्वाच्च श्रोत्रम् (?)" इति ।

## शास्त्रदीपिकानुवादः—

तथैव **शास्त्रदीपिकायाम्**"—"औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रमाणं बादरायणस्यानपेक्षत्वात् " । उक्तं प्रत्यक्षादीनामनिमित्तत्वम् । तत एव तन्मूलपुरुषवचनस्याथनिमित्तत्वम् । एवं तर्हि शब्दस्य सर्वत्र प्रमाणान्तरापेक्षयैव प्रामाण्यदर्शनात्तदभावे तस्याप्यप्रामाण्यादभावगम्यत्वमेवायातं धर्मस्येत्याशङ्कानिराकरणाय चोदनायाः प्रामाण्यमुच्यते । **सत्यम्** । लोके प्रमाणान्तरमूलानां प्रामाण्यम्, अतन्मूलानां चाप्रामाण्यं दृश्यते । न त्वेवमपि सापेक्षं प्रामाण्यम् । किं तु स्वतएव । अनाप्तवाक्यस्य त्वप्रामाण्यम् । मूलविरहात् । किं तु दुष्टमूलतया शब्दस्य दुष्टत्वात्स्वाभाविकस्य प्रामाण्यस्यापवादात् । अपौरुषेयत्वे तु वेदे **यद्यप्याप्त**प्रणीतत्वं नास्ति । **तथापि** प्रामाण्यस्य तदपेक्षाभावाद्नाप्तस्पर्शनिमित्तदोषाभावाच्चानपोदितं प्रामाण्यं भवति । **त्रेधा ह्यत्र पुरुषानुप्रवेशः**— पदपदार्थसम्बन्धद्वारेण वाक्यवाक्यार्थसम्बन्धद्वारेण वान्यस्यैव वा भारतादिवत्पौरुषेयत्वात् । न त्वेतत्त्रयमप्यस्ति । पदपदार्थसम्बन्धस्य नित्यत्वमत्रौत्पत्तिकशब्देनोक्तम् ॥ वाक्यार्थस्य च पदार्थमूलत्वम् । वेदस्य चापौरुषेयत्वमुपरिष्टाद्वक्ष्यते । न च साक्षाद्बाधकमस्तीत्यव्यतिरेकशब्देनोच्यते । अनुपलब्धार्थत्वाच्च नानुवादलक्षणमप्रामाण्यमस्तीति " अर्थेनुपलब्धे " इत्यनेनोक्तम् । एतच्च विशेषणत्रयमुपाददानेन सूत्रकारेण कारणदोषबाधकज्ञानरहितमगृहीतग्राहि ज्ञानं प्रमाणमिति—**प्रमाणलक्षणं** सूचितं भवति ॥—॥ **नन्वेवं** धारावाहिकेषूत्तरेषां पूर्वगृहीतार्थविषयकत्वादप्रामाण्यं स्यात् । तस्मादनुभूतिः प्रमाणमिति—प्रमाणलक्षणम् । स्मृतिव्यतिरिक्ता च प्रतीतिः—

**अनुभूतिः । स्मृतिश्च**—संस्कारमात्रजज्ञानमभिधीयते । मात्रग्रहणं च संस्कारसध्रीचीनेन्द्रियजस्य प्रत्यभिज्ञानस्य स्मृतित्वप्रसङ्गेनाप्रामाण्यं मा प्रसाङ्क्षीदित्येवमर्थम् । तदेवं संस्कारातिरिक्तकारणजन्यं ज्ञानं—**प्रमाण**मित्युक्तं भवति । तदिदं स्वप्नदर्शने तावदव्यापकम् । संस्कारमात्रजस्यापि ज्ञानस्य स्वरूपे कर्तरि च प्रामाण्यमिष्टं भवताम् ॥

"**अथ** स्मर्तव्यापेक्षयैव स्मृतेः स्मृतित्वम् । तद्विषयसंस्कारजत्वात् । स्वरूपकर्त्रपेक्षया त्वनुभूतिरेव । अतः सिद्ध्यति प्रामाण्यमिति ॥ **उच्यते** । एवं तर्हि मात्रग्रहणमनर्थकम् । प्रत्यभिज्ञानस्यापि पूर्वानुभूतांशापेक्षयैव स्मृतित्वात्तत्र चाप्रामाण्यमिष्टमेव । **यत्र** त्वंशे प्रामाण्यं तत्रानुभूतिरेव सा ॥—॥ **किं चानुवादानां** " य एवं विद्वान्पौर्णमासीम् " इत्यादीनामपि संस्कारमात्रजत्वाभावात्प्रामाण्यं स्यात् ॥—॥ **भवत्विति चेत् । न ॥** लोकविरोधात् । **तथा** लौकिकमपि वाक्यं वक्तृज्ञानानुमितार्थानुवादकतया प्रवर्त्तमानं प्रमाणं स्यात् ॥ **न चैत**दिष्टं भवताम् । "असन्निकृष्टग्रहणमनुवादानामशास्त्रत्वार्थमित्यङ्गीकरणात् ॥—॥ **अथा**नपेक्षं प्रमाणं—**यत्**स्वविषये प्रमाणान्तरं नापेक्षते, **तत्**प्रमाणम् ॥ अनुवादानां तु पुरोवादसापेक्षत्वादप्रामाण्यमिति ॥ एवं तर्हि लौकिकं वाक्यमप्यनुमितेर्थे प्रवर्तमानमनुमानस्य शङ्कानिराकरणमात्रौपयिकत्वादर्थप्रतिपादने तदपेक्षाभावात्प्रमाणं स्यात् ॥—॥ **तथा**नुमानस्य प्रामाण्यं न स्यात् । तद्धि नियतग्रहणमपेक्षते ॥ **न च** गृहीतमर्थमात्रयाप्यधिकं गृह्णातीति भवतां दर्शनम् । पीतशङ्खज्ञानमप्यनुभूतित्वात्प्रमाणं स्यात् । इष्टमेवेति वदतो लोकविरोधः । तस्माद्यथार्थमगृहीतग्राहि ज्ञानं प्रमाणमिति वक्तव्यम् । धारावाहिकेष्वप्युत्तरोत्तरेषां कालान्तरसम्बन्धस्यागृहीतस्य ग्रहणाद्युक्तं प्रामाण्यम् । सन्नपि कालभेदोऽतिसूक्ष्मत्वान्न परामृश्यत इति चेत् ॥ **अहो सूक्ष्मदर्शी देवानाम्प्रियः ॥** यो हि समानविषयया विज्ञानधारया चिरमवस्थायाथो परतः सोऽनन्तरक्षणसम्बन्धितयार्थं स्मरति किमत्र घटोवस्थित इति पृष्टः कथयति—अस्मिन्क्षणे मयोपलब्ध इति, **तथा** प्रातरारभ्यैतावत्कालं मयोपलब्ध इति । कालभेदं त्वगृहीते कथमेवं वदेत् । तस्मादस्ति कालभेदपरामर्शः । तदाधिक्याच्च सिद्धमुत्तरेषां प्रामाण्यम् ॥—॥ **ननु** यथार्थतापि चेत्प्रमाणलक्षणमुष्णजलज्ञानमप्रमाणं स्यात् ॥ **इष्टमेवैतत् ॥**

"ननु लोकविरोधः स्यात् । ये च यथार्थतां जानन्त एव लौकिकाः प्रामाण्यं मन्वीरन्, ते तु यथार्थतामेव मन्वानाः प्रामाण्यमभ्रान्तत्वं च मन्यन्ते । ये त्वयथार्थतां जानन्ति, ते–नैव प्रामाण्यं मन्यन्ते-नाप्यभ्रान्तताम् ॥ तस्मान्नास्ति विरोधः । पीतशङ्खज्ञानस्यापि स्मृति, त्वाभिमानादनुभूतित्वापरिज्ञानादप्रामाण्यं मन्यन्ते ॥ अतोऽस्माकमपि नास्ति विरोध इति चेत् ॥ तदयुक्तम् ॥ न हि लौकिकाः शुक्तिरजतज्ञानेऽपि स्मृतित्वं मन्यन्ते, नतरां पीतशङ्खज्ञाने । तस्मात्सूक्तम् " अर्थेऽनुपलब्धे " इति ॥–॥ वृत्तिकारस्त्वन्यथेदं वर्णयाञ्चकारेत्येवमादिनोपवर्षमतेन " तस्य निमित्तपरीष्टिः " [ १ । १ । ३ । ] इत्येवमादिसूत्रत्रयमन्यथा कृत्वा व्याचष्टे भाष्यकारः । तत्र निमित्तसूत्रेण तावत्प्रतिज्ञातस्य चोदनाप्रामाण्यस्यापरीक्षापदेशेन स्वतः प्रामाण्यं हेतुरित्युच्यते।प्रसिद्धानि हि प्रत्यक्षादीनि--प्रमाणानि । तदन्तर्गतं च शास्त्रम् ॥ ततस्तदपि प्रसिद्धमेव " इति ।

एवं सर्वेषु दर्शनेषु वेदानामीश्वरप्रकाशितत्वं साधितम् । अतस्तेषां साक्षादेव प्रामाण्यं वेदितव्यम् । मन्वादिस्मृतीनां कल्पसूत्राद्यङ्गानां च तन्मूलकतया ।

## अधिकरणन्यायमालानुवादः–

तत्प्रकारश्च जैमिनीयप्रथमाध्यायस्य तृतीयपादे दर्शितो न्यायमालादौ विद्यारण्याद्याचार्यैः । यथा–

" अष्टकादिस्मृतेर्धर्मे न मात्वं मानताथ वा ।
निर्मूलत्वान्न मानं सा वेदार्थोक्तौ निरर्थता ॥ १ ॥
वैदिकैः स्मर्यमाणत्वात्सम्भाव्या वेदमूलता ।
विप्रकीर्णार्थसंक्षेपात्सार्थत्वादस्ति मानता ॥ २ ॥

" अष्टकाः कर्तव्याः " इत्यादिस्मृतिवाक्यं न धर्मे प्रमाणं, पौरुषेयवाक्यत्वे सति मूलप्रमाणरहितत्वाद्, विप्रलम्भकवाक्यवत् ॥--॥ अथ मूलप्रमाणवत्त्वाय वेदार्थ एव स्मृतिभिरुच्यत इति मन्येथाः, तर्हि वेदेनैव तदर्थस्याधिगतत्वादियं स्मृतिरनर्था स्यात् ॥ तदानीमनुवादकत्वादप्रामाण्यम् ।

"इति प्राप्ते ब्रूमः । विमता, स्मृतिः, वैदिकमन्वादिप्रणीतस्मृ–

तित्वाद्, उपनयनाध्ययनादिस्मृतिवत् ॥ **न च** वैयर्थ्यं शङ्कनीयम्। अस्मदादीनां प्रत्यक्षेषु परोक्षेषु नानावेदेषु विप्रकीर्णस्यानुष्ठेयार्थस्यैकत्र संक्षिप्यमाणत्वात्। तस्मादियं स्मृतिर्धर्मे प्रमाणम्" इति।

### भगद्गीतागूढार्थदीपीकाद्यनुवादः–

"**एवं** शिष्टाचारोऽपि प्रमाणम्। **शिष्टाश्च**--मनुवसिष्ठादयस्तदनुयायिनश्च ग्राह्याः। "श्रुतिः स्मृतिः सदाचारः" इत्यादियाज्ञवल्क्यादिवचनेषु सदाचारशब्देन तदुक्तवर्णाश्रमधर्मानुरूपाचारस्यैव व्याख्यातृभिर्गृहीतत्वात् ॥ तेषां ज्ञानमितिहासपुराणादिभ्य एव भवतीतीहासपुराणादीनामपि श्रुतिस्मृतिवदेव प्रामाण्यमवश्यमभ्युपगन्तव्यम्। बृहदारण्यकतैत्तिरीयादिश्रुतिषु वेदवदेव तेषां परमेश्वरादुद्भवस्य ब्रह्मयज्ञादौ पठनविधानस्य च दर्शनात्। **मिथो विरोधस्तु** तेषां क्वचिदर्थवादन्यायेन, क्वचित्कल्पभेदेन, गुणोपसंहारादिकल्पनाभेदेन वा,–तत्र-तत्र परिहृत एव वेदव्यासादिभिः ॥ **न च** कल्पभेदो न संभवतीति वक्तुमपि शक्यते। एतत्सृष्टेः प्राक्सृष्ट्यन्तराभाव ईश्वराभावस्यापि प्रसङ्गात् ॥ **न च** केनापीश्वरजगत्कारणवादिनैतदिष्यते। नित्योऽहीश्वर एतत्सृष्टेः प्राक्सृष्ट्यन्तरं नाकरिष्यत्तदा तस्येश्वरत्वमेव व्यर्थमभविष्यत्। नियम्याभावात् ॥--॥ **किं च**--स्त्रीशूद्रद्विजबन्धूनां वेदाध्ययनानधिकारश्रवणात्, कृते च श्रवणमात्रे तेषां त्रपुजतुभ्यां श्रोत्रपूरणरूपस्य प्रायश्चित्तस्य स्मरणात्तेषामपि विदुरादिवद्विवेकादिसत्त्वे ब्राह्मणद्वारा पुराणेतिहासश्रवणादिकमेव मुक्तिसाधनं, न साक्षाद्वेदाध्ययनादि। तदर्थमपीतिहासपुराणादीनां प्रामाण्याभ्युपगम आवश्यक इति कृपया भगवता बादरायणेन महाभारतादिकं प्रकटीकृतम्। अत एव "वेदान्तगो ब्राह्मणः स्याद्" इति विष्णुसहस्रनामफलश्रुतिश्लोकव्याख्यावसरे स्त्रीशूद्राणां पुराणश्रवणादावपि विप्रद्वारैवाधिकारो, न साक्षादिति भगवत्पादैरुक्तम्। वेदोदितयावत्कर्मानुष्ठातुमशक्तानां ब्राह्मणादीनामप्यनुकल्पविधया पुराणश्रवणादिकमेव साधनम् ॥ अतोऽपि पुराणानां प्रामाण्यमत्यावश्यकम् ॥ **न** चेदानीन्तनानां तत्राप्यविश्वासे-समयानुपलम्भे वा,–सत्येतत्प्रलपनं सर्वं व्यर्थमेवेति **वाच्यम्**। बहूनामविश्वासेऽपि तत्त्वबुभुत्सुजनानां विश्वासदर्शनात्। तैरेव च प्रेरितत्वात्। तदर्थमेतत्कथनस्यावश्यकत्वात्। कालान्तरे बहूनामप्यत्र विश्वाससम्भवाच्च ॥

"**ननु** वेदानां यागीयपशुहिंसाविचारः—प्रामाण्यमयुक्तम्। तत्र हिंसामययागादिकर्मणो धर्मत्वबोधनादिति **चेत्** ॥ **न** ॥ देवतातृप्त्यर्थं यज्ञकर्मणि वधेऽपि पशूनां मन्त्रार्थवादपर्यालोचनयोत्तमलोकप्राप्तिनिश्चयेन वैधहिंसायाः पापजनकत्वाभाव इति जैमिनीयैः सिद्धान्तितत्वात् । अत एव छान्दोग्यादिश्रुतिषु वसिष्ठशौनकादिस्मृतिषु च " न हिंस्यात्सर्वा ( अहिंसन्त्सर्व ) भूतान्यन्यत्र तीर्थेभ्यः " [ ८ । १५ । १ ] इति वैधहिंसाऽभ्यनुज्ञाता ॥ **न च** मोक्षधर्मादिषु श्येनयागादिवज्ज्योतिष्टोमादेरपि हिंसामयस्य निंदाश्रवणात्पश्वर्थं पिष्टमानेयमित्यादिवाक्यैः पिष्टमयपशुयागस्यैव बोधनात्स्मृतिष्वपि क्वचिद्घृतपशुविधानदर्शनाच्च यागीयापि हिंसा न युज्यत इति **वाच्यम्** । पिष्टमयघृतमयपशुषु " हृदयस्याग्रेऽवद्यत्यथ जिह्वाया अथ वक्षसः " इत्यादिवाक्योक्तानां पश्वङ्गानां वपायाश्चासम्भवात् । अनेकवाक्यानां गौणवपाद्यङ्गग्रहणे लक्षणाद्याश्रयणस्याप्रामाणिकत्वात् । मोक्षधर्मादिवाक्यानि तु ऋषिभिराशङ्कितार्थानि, देवैस्तत्रैव परिहृतानि । अत एव गुरुप्रभृतिबन्धुवधजन्यपापापनोदाय " सर्वं पाप्मानं तरातितरातिब्रह्महत्यां योऽश्वमेधेन यजते " इत्यादिश्रुतिवाक्यानुरोध एव युधिष्ठिराय भीष्मपितामहेनोपदिष्टः । स च तेन कृतः । **किं च** वेदवाक्येषु शेषशेषिभावादिकं न श्रवणमात्रान्निश्चीयते । अपि तु " श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये ( मिथो विरोधे ) पारदौर्बल्यमर्थविप्रकर्षाद् " [ ३ । ३ । १४ । ] इति जैमिनिसूत्रानुसारेण । तत्र निरपेक्षोरवः—**श्रुतिः** । **लिङ्गं**—सामर्थ्यम् । समभिव्याहारः—**वाक्यम्** । उभयाकाङ्क्षा **प्रकरणम्** । पाठसादेश्यं—**स्थानं**।**समाख्या**—यौगिकः शब्दः।तत्र श्रुतिर्लिङ्गादिभ्यः प्रबलं प्रमाणम् । लिङ्गादिषु हि न प्रत्यक्षो विनियोजकः शब्दोऽस्ति । किं तु कल्प्यः । **यावच्च** तैर्विनियोजकः कल्प्यते—**ताव**त्प्रत्यक्षया श्रुत्या विनियोगस्य कृतत्वेन तेषां कल्पकत्वशक्तिर्विहन्यत इति—श्रुतेः प्राबल्यम्। अत एव " ऐन्द्या गार्हपत्यमुपतिष्ठते " इत्यत्र यावल्लिङ्गादैन्द्या इन्द्रोपस्थानाङ्गत्वं कल्प्यते, तावत्प्रत्यक्षया श्रुत्या गार्हपत्योपस्थानार्थत्वं क्रियत इत्यैन्द्री गार्हपत्योपस्थानाङ्गम् ।

"**लिङ्गं**—वाक्यादिभ्यो बलवत् । तेषां हि न साक्षाद्विनियोजकत्वम्, किं तु श्रुतिं कल्पयित्वा । **न चा**समर्थस्य श्रुतिं कल्प-

यित्वा विनियोगकल्पना संभवतीति सामर्थ्यस्यापि कल्प्यत्वेनोपजीव्यत्वात् । अतस्तैर्यावत्सामर्थ्यं कल्पयित्वा श्रुतिः कल्प्यते, **तावदेव** क्लृप्तेन सामर्थ्येन श्रुतिं कल्पयित्वा विनियोगः क्रियत इति तस्य प्राबल्यम् । अत एव "स्योनं ते सदनं करोमि घृतस्य धारया सुशेवं कल्पयामि" इत्यस्य सदनाङ्गत्वं-- लिङ्गात् । न तु वाक्यात् । तस्य दौर्बल्यादिति ।

"**वाक्यं**–प्रकरणादेर्बलीयः । प्रकरणं हि न साक्षाद्विनियोजकम् । तद्धि–आकाङ्क्षारूपम् ।। **न चा**ऽऽकाङ्क्षा स्वयं प्रमाणम् । किं तु साकाङ्क्षं वाक्यं दृष्ट्वा भवत्येतादृशी मतिः–नूनमिदं वाक्यं केनचिद्वाक्येनैकवाक्यभूतमिति ।। ततश्चाकाङ्क्षारूपं–**प्रकरणं** वाक्यस्य वाक्यान्तरेणैकवाक्यत्वे प्रमाणम् ।। एवं च **याव**त्प्रकरणं वाक्यं कल्पयित्वा विनियोजकं भवति, **ताव**द्वाक्यं लिङ्गश्रुती कल्पयित्वा विनियोजकं भवतीति प्रकरणाद्वाक्यं बलीयः । अत एव "इन्द्राग्नी इदं ँ हविरजुषेतामवीवृधेतां महो ज्यायोऽक्राताम्" इत्यत्रेन्द्राग्नीपदस्य लिङ्गाद्दर्शाङ्गत्वे सिद्धे "इद ँ हविः" इत्यादेरपि तदेकवाक्यत्वाद्दर्शाङ्गत्वम् । न तु प्रकरणाद्दर्शपूर्णमासाङ्गत्वम् । प्रकरणाद्वाक्यस्य बलीयस्त्वादिति ।

"**प्रकरणं**–स्थानादिप्रमाणाद्बलवत् । **यत्र** हि स्थानादङ्गत्वं, **तत्रा**न्यतरस्य प्रकारान्तरेण निराकाङ्क्षत्वम् । **न च** साकाङ्क्षं निराकाङ्क्षेण सम्बन्द्धुं योग्यं विनाकाङ्क्षोत्थापनेन । अतश्चान्यतराकाङ्क्षया **याव**दुभयाकाङ्क्षारूपप्रकरणकल्पनद्वारा वाक्यादिकं कल्पयितुमारभ्यते, **ताव**त्प्रकरणेन वाक्यं कल्पयित्वा विनियोगः क्रियत इति स्थानात्प्रकरणस्य बलीयस्त्वम् । अत एव विदेवनादयो धर्मा अभिषेचनीयसन्निधौ पठिता अपि नाभिषेचनीयस्याङ्गम् । तेषां तदङ्गत्वं स्थानाद्भवेत् । न तु प्रकरणात् । अभिषेचनीयस्याव्यक्तचोदनाचोदितत्वेन ज्योतिष्टोमविकारत्वात्, प्राकृतैरेवाङ्गैर्निराकाङ्क्षत्वात ।। **किं** तु प्रकरणाद्राजसूयाङ्गम् ।

"**स्थानं**–समाख्यातः प्रबलम् । तद्विनियोगे हि पदार्थयोर्देशसामान्यलक्षणः सम्बन्धः प्रत्यक्षः । समाख्याविनियोगे तु सम्बन्धो न प्रत्यक्षः । पदार्थयोर्भिन्नदेशत्वात् । अत एव शुन्धनमन्त्रः सान्नाय्य-

पात्राङ्गम् । पाठसादेश्यरूपात्स्थानात् । न तु पौरोडाशिकसमाख्यया पुरोडाशपात्राङ्गमिति । एवं विचारे क्रियमाणे न पिष्टमयपश्वादिप्रसक्तिः ।

"एवं च **यागीया हिंसाप्यपरिपक्वरागादिकषायाणां** स्वर्गाद्यार्थिनां मन्दाधिकारिणां देवर्णापाकरणार्थतया स्वर्गाद्यर्थितया च विहिता । " यज्ञेन देवेभ्यः " इति श्रुतेः । " अनपाकृत्य च ऋणं मोक्षमिच्छन्पतत्यधः " इति स्मृतेश्च । **परिपक्वकषायाणां तु**—जन्मान्तर एव ऋणस्य परिहृतत्वानुमानेन केवलं प्रत्यवायपरिहारार्थतयैव सर्वाङ्गोपसंहारमन्तरेणापि यथाशक्ति निष्कामतया मध्यमाधिकारिणां नित्यकर्माण्यनुष्ठेयानि । अनारब्धसञ्चितकर्मफलानतैरेव विनाशसंभवात् ॥ यस्य तु परिपक्वतमकषायस्य देहाद्यनपेक्षस्य विवेकादिसाधनसम्पन्नस्य—ऋणत्रयप्रत्यवाययोरवशेषो नास्तीति निश्चीयते, **स** एषणात्रयत्यागपूर्वकं "यदहरेव विरजेत्तदहरेव प्रव्रजेद्" इति" इति स्पष्टीकृतं चैतन्मधुसूदनादिभिर्भगवद्गीतागूढार्थदीपिकादिषु ।

तस्मात्त्रै**वर्णिकानां**—वेदोक्तमार्गेणैव परमपुरुषार्थसिद्धिः ॥ इतरेषां तु पुराणादिभिरिति सिद्धम् । **अर्थशास्त्रं, तन्त्रशास्त्रं च,** धर्मशास्त्राविरुद्धमेव ग्राह्यमिति मिताक्षरानिर्णयसिन्धुप्रभृतिग्रन्थेषु सप्रमाणं व्यवस्थापितमित्यलं विस्तरेण ॥

प्रामाण्यमेवं वेदादेर्विस्तृतं ग्रन्थकोटिषु ।
ततः किञ्चित्समाहृत्य सङ्क्षेपेणात्र वर्णितम् ॥ १ ॥
पुनरुक्त्यादयो दोषा ये स्युरत्र क्वचित्क्वचित् ।
ते भिन्नभिन्नग्रन्थानामनुवादात्समागताः ॥ २ ॥
क्वचिन्मुद्रयितुर्दोषाः क्वचिद्योजयितुस्तथा ।
पतिताः शोधनीयास्ते कृपया विदुषां गणैः ॥ ३ ॥
स्वस्वधर्मस्य रक्षार्थं सङ्ग्रहोऽयं कृतोत्र तम् ।
सुविद्वांसोनुमोदन्तामीश्वरोऽपि प्रसीदतु ॥ ४ ॥

**इति बोडसुपनामक श्रीमन्महामहोपाध्यायराजा ... ः कृता वेदप्रामाण्यचन्द्रिका समाप्ता ।**

ॐ वेदपुरुषार्पणमस्तु


